CASIO

# सुर के परदों पर हाथ फिराओ मस्ती में झूम-झूम जाओ



मनचाहे संगीत का केसियो पर आनंद उठाएं... बस परदों पर हाथ घुमाएं लय की धुन पर बजाओ मनपसंद गीत ...और देखो, कैसे थिरकते हैं प्यारे तुम्हारे मीत!

तो आओ, केसियो की संगीतमय खूबी का असली आनंद उठाओ... सचमुच इसका जवाब कहीं न पाओ!



## SA-20

- 32 मिनी की वाले
- 100 पी सी एम पहले ही सेट किए टोन
- 19 पी सी एम ऑटो रिद्म
- 13 "सुपर अकम्पनीमेंट" बेकिंग पैटर्न
- पहले सेट किए गए प्रदर्शन ट्यून
- दुहेरी स्पीकर सिस्टम



## PT-380

- 32 मिनी की वाले
- 100 पी सी एम पहले सेट किए गए टोन
- 12 पी सी एम ऑटोरिद्म
- मिनी माइक्रोफोन के साथ
- आर ओ एम पैक कंपेटिबल
- मेलोडी गाइड फ़ंक्शन
- 5 बिल्ट-इन साउण्ड इफेक्ट पैड

**CITY MUSIC CO., PTE LTD.**
Singapore Tel: 3377058, 3377545

**ONFLO MUSIC CO., LTD.**
Hong Kong Tel: 722 4195

**RAINBOW PHOTO FINISHERS PTE LTD.**
Nepal, Kathmandu Tel: 221724

**GENERAL ENTERPRISES COMPANY**
U.A.E., Dubai Tel: 224131/2/3

**MAHMOOD SALEH ABBAR CO.**
Saudi Arabia, Jeddah Tel: (02)6473995

**ARABIAN CAR MARKETING CO., LTD.**
Oman Tel: 793741

**CASIO COMPUTER CO., LTD.**
Tokyo, Japan

जिज्ञासा –

# 'देवं नमस्करोति' इति प्रयोगः

शिष्यः- श्रीमन्, 'रामः देवाय नमस्करोति' इति वाक्यं साधु, उत 'रामः देवं नमस्करोति' इति वाक्यम्?

आचार्यः- 'रामः देवं नमस्करोति' इति वाक्यम् एव उचितम्। 'नमस्करोति' इति क्रियापदं यत्र दृश्यते तत्र द्वितीया प्रयोक्तव्या।

शि - श्रीमन्, 'हरये नमः', 'हराय नमः', 'देवाय नमः' इत्यादिषु चतुर्थीविभक्तिः दृश्यते खलु? तद्वदेव 'देवाय नमस्कोरति' इति प्रयोगे कृते को दोषः?

आ - 'देवं नमस्करोति इत्यत्र एव औचित्यम्' इत्येतेन मम वचनमात्रेण भवतः न तृप्तिः। अतः शास्त्रीयं विवरणम् एव दातव्यं भवति मया। उपपदविभक्ति-कारकविभक्त्योः भेदं जानाति वा भवान्?

शि - जानामि। यत्र केषाञ्चन शब्दानां सन्निधिमात्रेण साक्षात् विभक्तेः विधानं क्रियते तत्र उपपदविभक्तिः इति उच्यते। यत्र च कर्तृ-करण-सम्प्रदानादिकारकाणां विधानं कृत्वा, ततः विभक्तिः विधीयते तत्र कारकविभक्तिः इति उच्यते।

आ - सम्यक् उक्तं भवता। एकैकस्य एकैकम् उदाहरणं वदतु तावत्।

शि - "नमःस्वास्तिस्वाहास्वधालंवषड्योगाच्च" इत्यनेन सूत्रेण साक्षात् चतुर्थी विधीयते। अतः अत्र उपपदविभक्तिः। 'कर्तुरीप्सिततमं कर्म' इत्यनेन कर्मकारकं विधाय 'कर्मणि द्वितीया' इति सूत्रेण द्वितीया विधीयते। अतः अत्र कारकविभक्तिः।

आ - 'उपपदविभक्तेः कारकविभक्तिः बलीयसी' इति कश्चन नियमः अस्ति। 'नमस्करोति' इत्यत्र "नमःस्वस्ति ...." सूत्रात् चतुर्थी प्राप्ता। 'कर्मणि द्वितीया' इत्यनेन सूत्रेण द्वितीया प्राप्ता। एतादृशे सन्दर्भे कारकविभक्तेः एव

बलीयस्त्वात् द्वितीया एव वक्तव्या। अतः 'देवं नमस्कोति' इत्येव प्रयोगः उचितः।

शि - 'नमस्कुर्मो नृसिंहाय', 'स्वयम्भुवे नमस्कृत्य' इत्यादिषु चतुर्थीप्रयोगः दृश्यते खलु? एतादृशाः प्रयोगाः सिद्धान्तकौमुद्यां समर्थिताः इति श्रुतं मया।

आ - 'नमस्कुर्मो नृसिंहाय' इति प्रयोगः सिद्धान्तकौमुद्याम् अस्ति इति जानन् भवान् तत्रैव उक्तम् 'उपपदविभक्तेः कारकविभक्तिः बलीयसी' इति नियमं, 'देवान् नमस्करोति' इति प्रयोगं च जानीयात् एव। एवं तर्हि किमर्थं प्रश्नः कृतः भवता? मम परीक्षार्थम् ...?

शि - तथा न श्रीमन्। 'नमस्कुर्मो नृसिंहाय' इत्यत्र चतुर्थी समर्थ्यते। 'नमस्करोति देवान्' इत्यत्र द्वितीया समर्थ्यते। एवं तर्हि युक्ततरः मार्गः कः इति अजानन् अहं पृष्टवान्।

आ - 'नमस्कुर्मो नृसिंहाय' इत्यत्र नृसिंहम् अनुकूलयितुम् इति तुमुन्नन्तार्थस्य अध्याहारः क्रियते*। पूर्वजैः प्रयुक्तस्य अन्वाख्यानार्थम् एषः क्रमः अनुसृतः।

शि - चतुर्थ्यन्तप्रयोगस्य अन्वाख्यानं तु कृतम्। अतः एतादृशं प्रयोगम् अनुकुर्वद्भिः अस्माभिः अपि कुतो वा चतुर्थी न प्रयोक्तव्या?

आ - पूर्वजैः कृतस्य प्रयोगस्य साधुत्वसम्पादनार्थम् एवम् अन्वाख्यानं कृतम्। तत्र अध्याहारकृतं गौरवम् अपि अस्ति। अतः तदपेक्षया द्वितीया एव उचिता स्यात् इति मम आशयः। नमस्करोति इति पदस्य श्रवणात् कर्मणः आकाङ्क्षा उदेति। अतः द्वितीया एव उचिता स्यात्।

शि - चतुर्थ्यन्तपदयुक्तस्य प्रयोगस्य असाधुत्वं नास्ति। तथापि व्यवहारे द्वितीयायाः प्रयोगः एव उचितः इति भवतः आशयः।

आ - आम्। 'देवं नमस्करोति' इत्येतस्य द्वितीयान्तपदयुक्तस्य प्रयोगस्य अनुकरणे एव औचित्यम्।

---

* क्रियार्थोपपदस्य कर्मणि स्थानिनः – २-३-१४

# चन्दमामा

संस्थापकः– 'चक्रपाणिः'        सञ्चालकः– 'नागिरेड्डी'

**मा**नवकुलं सदापि सन्मार्गेण एव गच्छति इति सुनिश्चितं वक्तुं न शक्नुमः वयम्। कालखण्डे दुष्टतायाः अपि प्राबल्यं भवेत् कदाचित्। किन्तु तादृशे अपि सन्दर्भे वस्तुतत्त्ववादिनः चिन्तकाः केचन भवन्ति एव। तैः यत् उच्यते तत् सर्वथा चिन्तनार्हं भवति।

हिन्दूनां मुसलमानानां च पृथक् पृथक् देशः स्यात् इति वादं पुरस्कृत्य भारतस्य विभागः कृतः। किन्तु अनन्तरकालीनाः घटनाः ज्ञापयन्ति यत् एकजातीयानाम् एकत्र वासेन केवलेन, देशे एकात्मताभावः सुदृढं सुचिरं च स्थातुं न अर्हति इति। पाकिस्थानम् अत्र प्रत्यक्षम् उदारणम्। पाकिस्थानात् बांग्लादेशः पृथक् जातः। भाविनं सुखजीवनं सम्भाव्य पाकिस्थानं गताः बहवः मुसलमानाः इदानीं त्रिशङ्कुस्थितौ सन्ति। पाकिस्थानम् इदानीं काश्मीरप्रदेशे अशान्तिं वर्धयितुं प्रयतमानम् अस्ति अपि।

स्वातन्त्र्ययोधेन भूतपूर्वकेन्द्रसचिवेन अब्दुल् गफूर्वर्येण पत्रकाराणां समावेशे प्रकटितः कश्चन आशयः इदानीं स्मरणार्हः अस्ति। स च– ''मतस्य आधारेण भारतं विभक्तं यत् तत्तु आत्महत्यातुल्यम्। एषा हि वस्तुस्थितिः। यदि अद्य भारत-पाकिस्थान-बांग्लादेशीयाः जनाः प्राचीनं भेदभावं विस्मृत्य, कृतकाः सीमाः अपसार्य, अखण्डे सुदृढे देशे वसेयुः तर्हि वयं समग्रे एशियाखण्डे अपूर्वशक्तिरूपेण प्रकाशिताः स्याम'' इति।

निर्भीकस्य साहसिकस्य चिन्तकस्य एतत् वचनं प्रस्तुते एतस्मिन् काले किं चिन्तनार्हं नास्ति?

सम्पुटः–७        डिसेम्बर्–१९९०        सञ्चिका–९

प्रतिकृतिमूल्यं रू. ३-००   *   वार्षिकं ग्राहकशुल्कं रू. ३६-००






# पश्चिम-एशियाप्रदेशे युद्धप्रसङ्गः




प्राचीने काले मेसपोटमिया इति ख्यातः, इराकदेशः नैर्ऋत्य-एशियाप्रदेशे ४, ३३, १२० वर्ग कि.मी. यावत् व्याप्तः अस्ति। सुप्रसिद्धं बगदाद्नगरम् एतस्य देशस्य राजधानी। इराकदेशः प्रायः मरुभूमिमयः। टिग्रिस्-यूफ्रटेस्नामिके नद्यौ एतस्मिन् देशे प्रवहतः।

इराकदेशस्य प्रतिवेशी अस्ति कुवैतदेशः। २४,२३५ वर्ग किलोमीटरात्मकः कुवैतदेशः अपि प्रायः मरुभूमिमयः एव। किन्तु इदानीम् आढ्येषु देशेषु अन्यतमः अस्ति कुवैतदेशः। देशः तु आढ्यः, किन्तु अत्रत्याः अधिकसङ्ख्याकाः सामान्याः दारिद्र्यदेव्या आलिङ्गिताः एव, यतः धनसम्पत्तिः केषाञ्चित् एव अधीना अस्ति अत्र।

इराक-कुवैतदेशौ तैलक्षेत्रम् आधारीकृत्य एव जीवतः। प्रपञ्चस्थाः बहवो देशाः तैलार्थम् अरबदेशान् आश्रित्य तिष्ठन्ति। अतः एते देशाः तदा तदा इन्धनतैलस्य मूल्यं वर्धयन्तः धनं लुण्ठयन्तः सन्ति।

१७५६तमवर्षात् आरभ्य कुवैतदेशे शेखवंशजानाम् एव शासनम्। अतः अत्र समग्रः अधिकारः एकस्य वंशस्य अधीनः तिष्ठति। राजा अमीरशब्देन उच्यते अत्र। युवराजः प्रधानमन्त्रिस्थानम् अलङ्करोति।

इराकदेशः कथयति यत् कुवैतदेशः पूर्वं वस्राराज्यस्य अङ्गम् एव आसीत्, आंग्लशासकाः एतं देशं स्वतन्त्रं कृतवन्तः इति। इतः पूर्वं बहुवारं कुवैतदेशं स्वायत्तीकर्तुम् इराकदेशेन प्रयत्नाः कृताः। किन्तु ते असफलाः आसन्। गते अगस्ट्मासे इराकसेनया कुवैतदेशस्य उपरि आक्रमणं कृतम्। प्रतिरोधः तु सर्वथा शून्यप्रायः आसीत्। कुवैतराजेन सौदि-अरेबियादेशः शरणं गतः, स्वप्राणाः रक्षिताः च।

इराकदेशः कुवैतविषये अक्षिपति यत् कुवैतदेशेन भूमिगतसाधनानां द्वारा मदीयेषु तैलक्षेत्रेषु तैलं चोर्यमाणम् आसीत् इति।

कुवैतदेशे निरङ्कुशं शासनं प्रचलति स्म। इराकदेशे तु सर्वाधिकारिणः सद्दामहुसेनवर्यस्य शासनम्। अयं सद्दामहुसेनः शत्रूणाम् उपरि विनाश-

कारकस्य अस्त्रस्य प्रयोगे अपि समुत्सुकः एव। एवं हि श्रूयते– इराकदेशे तादृशम् अस्त्रम् अस्ति, यस्य च प्रयोगेण आकाशः धूमेन व्याप्तः भवति, एतस्य च वायोः सेवनेन शरीरे तापः उत्पद्यते। लशुनगन्धस्य एतस्य अस्त्रस्य नाम 'मस्टर्ड् गेस्' इति। 'सरीस्'नामकस्य अन्यविधस्य अस्त्रस्य एतस्मिन् विषये अन्येषां देशानां सहमतिं प्राप्तुं तेन प्रयत्नः क्रियमाणः दृश्यते। किन्तु विभिन्नैः कारणैः परवशीकृताः बहवः देशाः इराकदेशस्य भर्त्सने न समुत्सुकाः। किन्तु ते सर्वे इच्छन्ति यत् सौदी-अरेबियाप्रदेशे अमेरिका-इराकदेशयोः युद्धं मा भवतु इति।

सद्दामवर्येण स्वदेशे इराकदेशे च सहस्रशः




गन्धः न कटुः, किन्तु तस्य आघ्राणेन शरीरे पक्षवातस्य उत्पत्तिः, ततश्च मरणम्!

यदा इराकदेशेन कुवैतदेशः स्वायत्तीकृतः तदा अमेरिकादेशेन इराकप्रतिवेशिदेशं सौदी-अरेबियां प्रति स्वसेना प्रेषिता। इराकनौकाः निरोद्धुं, कुवैतदेशं स्वतन्त्रं कर्तुं च अमेरिकादेशेन प्रयत्यमानम् अस्ति। अमेरिकादेशीयाः युरोपदेशीयाः च बन्धने स्थापिताः सन्ति। लक्षशः भारतीयाः अपि कष्टम् अनुभवन्तः आसन्। (एतावता ते सर्वे भारतम् आनीताः।) इराक-अमेरिकादेशयोः मध्ये यस्मिन् कस्मिन् अपि क्षणे युद्धं भवितुम् अर्हति। अतः एव प्रपञ्चे सर्वत्र आतङ्कः प्रसृतः दृश्यते।




# प्रतीकारसाधनेच्छा

माधवपुरनामके ग्रामे पूर्वं विनयः नाम कश्चन युवकः निवसति स्म। विनयः आकारेण सर्वथा असुन्दरः। तस्य हस्तौ कृशौ सामर्थ्यहीनौ च। सः खञ्जः अपि। दर्शनमात्रेण एव अनादरः करुणा च यथा उत्पद्येत तथा अस्ति सः।

विनयस्य माता प्रसूत्यनन्तरं द्वित्रेषु दिनेषु दिवङ्गता आसीत्। यदा एषः सप्तवर्षीयः आसीत् तदा एतस्य पिता कृषिक्षेत्रे कार्यं कुर्वन् सर्पेण दष्टः सन् प्राणान् त्यक्तवान् आसीत्। एवम् अनाथः जातः विनयः।

मातुलः कनकराजः विनयस्य कृषिक्षेत्रं वशीकृत्य विनयं सामान्यं सेवकम् इव अनादरेण पश्यति स्म। ग्रामज्येष्ठाः कनकराजस्य एतादृशं व्यवहारं जानन्तः अपि मौनं स्थितवन्तः आसन्। धनोन्मत्तः कनकराजः 'अस्थाने भवतां प्रवेशः किमर्थम्' इति वदेत् इति भीतिः तेषाम्।

शरीरसामर्थ्यस्य अभावात् विनयः शारीरकश्रमेण जीवितुम् अपि नार्हति। ग्रामीणाः करुणया किमपि यच्छन्ति चेत् तत् खादन् जीवति सः। अतः प्रतिदिनं सः पूर्णोदरं भोजनम् अपि न प्राप्नोति।

माधवपुरे जानकी नाम वृद्धा आसीत्। विनये विशेषकरुणा तस्याः। सा तदा तदा विनयं वदति स्म– "भोः, भवतः पित्रार्जिता सम्पत्तिः वस्तुतः भवता प्राप्तव्या। मातुलः कनकराजः अन्याय्येन व्यवहरन् सर्वं स्वाधीनीकृतवान् अस्ति। कोऽपि प्रष्टा नास्ति इति भावयति सः। अतः भवान् धैर्येण तं वदतु – मदीयां सम्पत्तिं मह्यं ददातु इति। आये अर्धभागं वा ददातु इति प्रार्थयतु। तस्य हृदये यदि दया किञ्चित् वा स्यात् तर्हि दद्यात्" इति।



एतेन प्रेरितः विनयः कदाचित् कनकराजसमीपं गत्वा धैर्येण– "मम पित्रार्जितसम्पत्तितः प्राप्यमाणे आये अर्धभागः मह्यं दातव्यः भवता" इति उक्तवान्।

एतत् श्रुत्वा कनकराजः नितरां क्रुद्धः। "भोः, एतावत् धैर्यं कदा आगतं भवतः? आये अर्धभागं किं, एकां वराटिकाम् अपि न दास्यामि। निर्गच्छतु इतः। इतः परं मम गृहे आश्रयः नास्ति भवतः" इति निर्दाक्षिण्यम् उक्तवान् सः। अर्धचन्द्रप्रयोगेण विनयं ततः निष्कासितवान् अपि।

कनकराजस्य एतादृशेन व्यवहारेण विनयस्य अपि कोपः आगतः। अन्याय्यम् असहमानः सः ग्रामप्रमुखस्य नारायणदासस्य समीपं गत्वा प्रवृत्तं समग्रं निवेद्य न्यायं प्रार्थितवान्।

"भवतः चिन्ता मास्तु। अहं न्यायान्यायं विचारयिष्यामि" इति उक्त्वा विनयं प्रेषितवान् सः। अनन्तरं कनकदासं स्वसमीपम् आहूय– "विनयेन भवद्विषये अन्याय्याचरणम् आरोपितम्। किं वदति भवान् एतद्विषये?" इति पृष्टवान्।

कनकराजः नारायणदासाय कानिचन रजतनाणकानि दत्त्वा उक्तवान्– "श्रीमन्! विनयस्य विषये भवता अज्ञातं किमस्ति? तस्य पोषणार्थं मया धनव्ययः कृतः एव। विकलाङ्गः सः कृषिं कर्तुं न अर्हति। इदानीं दुष्टैः प्रेरितः एवम् आरोपं कुर्वन् अस्ति। भूमिं प्राप्य अपि सः अल्पेन एव कालेन पराधीनां कुर्यात् एव। अतः एतावत्पर्यन्तं यथा प्रवृत्तं तथैव अनुवर्ततां नाम" इति।

धनं किं वा न कारयति? नारायणदासः विनयम् आहूय उक्तवान्– "भोः, मया सर्वं विचारितम्। भूमिः कनकराजस्य वशे एव भवेत्। भवतः पित्रा तथा व्यवस्था कृता आसीत्। तत् भवान् न जानाति। अतः भवता कनकराजः एतद्विषये किमपि न प्रष्टव्यः। एतद्विषये भवान् दौष्ट्येन यदि कदाचित् किमपि कुर्यात् तर्हि भवन्तं ग्रामात् बहिष्करिष्यामि" इति।

तस्मिन् ग्रामे कान्तराजः नाम कश्चन

कृषिकः निवसति स्म। तस्य पुत्र्याः नाम वासन्ती इति। सर्वेषाम् अनादरपात्रभूते विनये तस्याः विशेषकरुणा। अतः सा सहानुभूत्या तदा तदा विनयाय खाद्यानि ददाति। मातापितरौ यथा न जानीयातां तथा तेन सह मैत्र्या वार्तालापं करोति सा। विनयः विकलाङ्गः चेदपि बुद्धिमान् सहृदयः च इति भावयति स्म सा।

कदाचित् विनयः वासन्ती च एकान्ते वार्तालापं कुर्वन्तौ आस्ताम्। एतत् दृष्टं कान्तराजेन। एतेन क्रुद्धः सन् सः विनयं सम्यक् ताडयित्वा– "इतः परं मम गृहस्य दिशि दृष्टिं पातयति चेत् भवन्तं यमलोकं प्रेषयिष्यामि" इति उक्त्वा प्रेषितवान्। पुत्रीं च गृहबन्धने स्थापयन् अल्पे एव काले तस्याः विवाहम् अपि निर्वर्तितवान् सः।

एतत्सर्वं दृष्ट्वा विनयः जीवने नितरां विरक्तः जातः। 'क्रूरजन्तोः कस्यचित् आहारः भविष्यामि' इति चिन्तयन् सः समीपस्थम् अरण्यं गतवान्।

तस्मिन् अरण्ये अभयानन्दः नाम मुनिः निवसति स्म। सः विनयं दृष्ट्वा तदीयां दुरवस्थाम् आद्यन्तं श्रुतवान्। अन्ते सः उक्तवान्– "वत्स! भवतः अवस्थां दृष्ट्वा अहं नितरां खिन्नः अस्मि। अतः भवन्तम् एकेन वरेण अनुग्रहीतुम् इच्छामि। मम समीपे असदृशं मन्त्रद्वयम् अस्ति। एकस्य मन्त्रस्य जपः कृतः चेत् जपकर्तुः दर्शनमात्रेण



अभिमुखं स्थितः वज्रहृदयः चेदपि महतीं भीतिं प्राप्स्यति। अपरस्य मन्त्रस्य जपतः तु अभिमुखं स्थितः कठोरहृदयः अपि दयार्द्रहृदयः भविष्यति। अनयोः अन्यतरं भवन्तम् उपदेष्टुम् अर्हामि। भवान् कं मन्त्रम् इच्छति?" इति।

तस्मिन् समये विनयः, सम्पत्तिम् अपहृतवन्तं मातुलं कनकराजम्, न्यायदानविषये अन्याय्येन व्यवहृतवन्तं नारायणदासं, वासन्तीं दूरीकृतवन्तं कान्तराजं च स्मृतवान्। 'एतेषां विषये अवश्यं प्रतीकारः साधनीयः' इति आलोचितवान् विनयः। अतः 'भीतिजनकं मन्त्रम् एव माम् उपदिशतु' इति मुनिम् उक्तवान् सः। विनयस्य आशयः पूरितः

मुनिना।

विनयः ग्रामं गत्वा कनकराजस्य गृहस्य द्वारम् अङ्गुल्या ताडितवान्। द्वारम् उद्घाटितवान् कनकराजः उपस्थितं विनयं दृष्ट्वा कोपेन– "अये वराक! अत्र न आगन्तव्यम् इति उक्तं खलु मया? पुनः किमर्थम् आगतः? ऐश्वर्यं प्रष्टुम्, उत ताडनं प्राप्तुम्?" इति पृष्टवान्।

विनयः उत्तररूपेण किमपि अवदन् मुनिना अभयानन्देन अनुगृहीतं मन्त्रं जपितवान्। अपरस्मिन् क्षणे घोरः राक्षसः इव सः दृष्टः कनकराजेन। कनकराजः भीत्या कम्पमानः विसंज्ञः सन् तत्रैव पतितवान्।

एतत् दृष्ट्वा तृप्तिं प्राप्य विनयः नारायणदाससमीपं गतवान्। तत्र अन्यैः कैश्चित् सह वार्तालापं कुर्वन् आसीत् नारायणदासः। अग्निम् उद्वमन् घोरः मृगः इव विनयः दृष्टः नारायणदासेन। सः करौ योजयित्वा किमपि वक्तुम् उद्युक्तः सन् अपि वक्तुम् असमर्थः सन्, ततः धावितुम् अपि असमर्थः सन् तत्रैव पतितवान्।

अनन्तरं कान्तराजस्य गृहं गतवान् विनयः। कान्तराजः कृषिक्षेत्रं गतः आसीत्। विनयः तत्रैव गतवान्। अग्निम् उद्वमन् फूत्कुर्वन् भीतिजनकः रौद्राकारः सहस्रफणः सर्पः इव विनयः दृष्टः कान्तराजेन। कान्तराजः करौ योजयित्वा अस्पष्टं किमपि वदन् मूर्च्छां गतवान्।

त्रयाणां विषये विनयस्य कोपः आसीत् खलु? योग्यः प्रतीकारः साधितः इति तृप्तिं



प्राप्तवान् सः। किन्तु एषा तृप्तिः क्षणिका। यतः विनयः अरण्यं गत्वा मन्त्रशक्तिं सम्पाद्य आगतः अस्ति इति वार्ता समग्रे ग्रामे प्रसृता। कनकराजादिभिः प्राप्ता दुरवस्था अपि ग्रामीणैः श्रुता। अतः सर्वे विनयस्य दर्शनात् भीताः भवन्ति। यदि सः मार्गेण गच्छति तर्हि मातरः द्वारं पिधाय तिष्ठन्ति। परिचिताः तस्य अभिमुखम् आगन्तुम् अनिच्छन्तः परिवृत्य पलायनं कुर्वन्ति। एतत्सर्वं दृष्ट्वा विनयः कानिचन दिनानि यावत् गर्वम् अनुभूतवान्। किन्तु अनन्तरकाले आत्मनः विषये एव जुगुप्साम् अनुभूतवान् सः।

एवम् एव दिनानि गतानि। पञ्च वर्षाणि अपि अतीतानि। कदाचित् विनयः ग्रामसीमायां स्थिते आम्रोद्याने गच्छन् आसीत्। तत्र क्रीडत्सु बालेषु कश्चित् बालः विनयं दृष्ट्वा भीतः सन् आम्रशाखातः अधः पतितवान्।

विनयः झटिति अग्रे गत्वा तम् उत्थाय– "वत्स! व्रणितः वा? न खलु? रोदनं मास्तु। क्रीडासमये जागरूकता आश्रयणीया" इति प्रीत्या उक्तवान्।

बालकस्य रोदनं स्थगितम् अभवत्। सः भीत्या कम्पमानः दृष्टः। तदा विनयः तं पृष्टवान्– "भोः, किमर्थं भीतिः, कम्पनं वा? मम दर्शनात् भीतिः वा?" इति।

"अये, मान्त्रिकः भवान्। कृपया मां मा पीडयतु। मां त्यजतु कृपया" इति उक्तवान् सः बालकः।

विनयः तस्य बालस्य विषये अनुकम्पं



प्रदर्शयन् ततः निर्गतवान्। 'भीतिजनकस्य मन्त्रस्य प्रयोगः मया त्रयाणां पुरतः कृतः। अतः जनाः मां मान्त्रिकं भावयन्तः वृथा भीताः सन्ति। न कोऽपि मया सह भाषते। न प्रीत्या व्यवहरति' इति आलोचयन् सः महान्तं खेदम् अनुभवन् कस्यचित् गृहस्य पुरतः उपविष्टवान्।

एकघण्टाभ्यन्तरे वासन्ती तम् अन्विष्यन्ती आगत्य तं दृष्ट्वा– "भोः, आवयोः प्रीतिमध्ये विघ्नम् आचरितवतः मम पितुः विषये मन्त्रप्रयोगं कुर्वता भवता सः मूकीकृतः। अद्य आम्रोद्याने क्रीडतः मम पुत्रस्य उपरि भवतः दृष्टिः पतिता इति श्रुतम्। करौ योजयित्वा प्रार्थये– मम पुत्रं मन्त्रप्रयोगेण मा पीडयतु इति। भवन्तं साष्टाङ्गं नमस्करोमि" इति उक्त्वा पादौ गृहीतवती।

वासन्त्याः एतानि वचनानि श्रुत्वा विनयः आश्चर्यचकितः खिन्नः च। तस्य नेत्राभ्याम् अश्रूणि आगतानि। 'अहं किमपि न करोमि, भीतिः मास्तु' इति हस्तसङ्केतेन सूचयन् सः ततः निर्गत्य अरण्यं प्राप्तवान्।

अभयानन्दमुनिं दृष्ट्वा साष्टाङ्गं नमस्कृत्य– "मुनिवर्य! मया मम दोषः सम्यक् ज्ञातः। सर्वे मां नररूपिणं राक्षसं मान्त्रिकं वा भावयन्ति। अतः पूर्वं दत्तं तं दुष्टं मन्त्रं प्रतिसंहरतु कृपया। सर्वे मां प्रीत्या आदरेण च यथा पश्येयुः तथा करोतु" इति प्रार्थितवान्।

अभयानन्दः विनयस्य वचनं मन्दहासपूर्वकं श्रुत्वा पूर्वतनं मन्त्रम् उपसंहृत्य नूतनं मन्त्रम् उपदिष्टवान्। विनयस्य मनसः भारः अपगतः। 'महत् कण्टकम् अपगतम्' इति भावितवान् सः।

इदानीं कस्यापि विषये कोपः नास्ति विनयस्य। 'मया इतः परं नूतनं जीवनं यापनीयम्। कस्यापि अनादरः अप्रीतिः वा मयि यथा न स्यात् तथा जीवनं यापनीयम्' इति आलोच्य सः स्वग्रामगमनविचारं परित्यज्य दूरप्रदेशम् उद्दिश्य गतवान्।





# लुण्ठाकः युवराजः

## १४

(अरण्ये निवसतां विद्रोहिणां ग्रहणार्थं वीरसिंहः मृगयाव्याजेन सैनिकैः सह अरण्यं गतवान्। जयानन्दमुनेः बन्धनात् अरण्यस्थाः सर्वे पशुपक्षिणः क्रुद्धाः सन्तः वीरसिंहस्य तत्सैनिकानां च उपरि आक्रमणं कृतवन्तः। ततः कथमपि पलाय्य आगत्य राजधानीं प्राप्य निरातङ्कं निःश्वसितवान् वीरसिंहः। तदनन्तरम्......।)

अरण्ये यत् अपमाननं जातं तस्य परिणामतः वीरसिंहः इदानीं राजसभाम् आगन्तुं लज्जाम् अनुभवति। अन्तःपुरे एव अधिकं समयं यापयति सः। अरण्ये अवितर्किता या घटना प्रवृत्ता तया सर्वथा दिग्भ्रान्तः अस्ति वीरसिंहः। एषु दिनेषु निरन्तरं पराजयाः दृष्टाः यत् तेन इदानीं सः चिन्ताक्रान्तः अस्ति। अतः प्रसह्य प्रवर्तनार्थम् उत्साहः नास्ति तस्य।

एवं गच्छता कालेन वीरसिंहस्य सामर्थ्यं क्षीयमाणम् अस्ति। अत एव एतां व्यथां पूरयितुम् इच्छतः तस्य दुष्टकार्याणि वर्धन्ते।

एवं स्थिते कदाचित् गूढचराः वार्ताम् आनीतवन्तः यत् विद्रोहिणः युवकाः न केवलम् अमृतपुरीतः साहाय्यं प्राप्नुवन्ति, अपि तु शङ्करवर्मणा पाल्यमानायाः



जयपुरीतः अपि इति।

'अमृतपुरी वशीकरणीया इति उद्देशेन कृता योजना असफला जाता। अमृतपुरीराजः इदानीं स्वास्थ्यं प्राप्नुवन् अस्ति। अन्यच्च तेन स्वसेना सम्यक् वर्धिता इति श्रूयते। अतः अमृतपुर्याः वशीकरणं स्वप्नमात्रम्। शङ्करवर्मणः राज्यम् अल्पम्। अतः तत् राज्यम् अल्पेन प्रयत्नेन वशीकर्तुं शक्येत। एवं कृतं चेत् पराजयपरम्परा छेदिता भवेत्। तदा सैनिकेषु अपि नवोत्साहः दृश्यते' इति आलोचितवान् वीरसिंहः।

वीरसिंहस्य चिन्तनं ज्ञात्वा मन्त्री उक्तवान्– "प्रभो, एषु दिनेषु दुर्ग-निर्माणसमये शङ्करवर्मणा अमूल्यः निधिः प्राप्तः इति श्रूयते। अतः सः सन्तोषेण गर्वेण च युक्तः अस्ति इदानीम्। तस्य गर्वस्य भञ्जनार्थम् एषः एव सुसमयः। अन्यच्च तेन कनकदुर्गाविग्रहः अपि प्राप्तः इति श्रूयते। सः च विग्रहः सुवर्णमयः परमरमणीयश्च इत्यपि श्रुतं मया" इति।

"स च विग्रहः सुन्दरः वा भवतु, असुन्दरः वा, किं तेन? किन्तु सः सुवर्णमयः खलु? तावता अलम्। वयं तत् सुवर्णम् इच्छामः। धान्यविनिमयेन आयुधानि क्रेतव्यानि इति आसीत्। स च विचारः असफलः जातः। सुवर्णम् अस्ति चेत् प्रभूतानि आयुधानि क्रेतुम् अर्हामः" इति उक्तवान् वीरसिंहः।

एतत्सर्वं शृण्वन् पार्श्वे एव स्थितः सेनापतिः सर्वदमनः तदा उत्साहेन पृष्टवान्– "प्रभो, एवं तर्हि जयपुर्याः आक्रमणार्थं सेनां सज्जीकरोमि वा?" इति।

"किं भोः, चटकं लक्ष्यीकृत्य ब्रह्मास्त्रप्रयोगः वा? यस्य राज्यस्य सेना एव नास्ति तादृशस्य जयपुरीराज्यस्य उपरि आक्रमणार्थम् उत्साहः भवतः! एवं कृतं चेत् जनाः अस्मान् न उपहसेयुः वा? अन्यच्च यदि वयं जयपुर्याः उपरि आक्रमणं कुर्याम तर्हि अमृतपुरीराजः जयपुर्याः साहाय्यार्थम् आगच्छेत्। अमृतपुर्याः सेनां सम्मुखीकर्तुं किम् अस्माकं सामर्थ्यम् अस्ति?" इति असमाधानेन पृष्टवान् वीरसिंहः।

किम् उत्तरं वक्तव्यम् इति अजानन्

सर्वदमनः शिरः अवनमय्य मौनं स्थितवान्। तदा वीरसिंहः पुनः उक्तवान्– "युद्धस्य प्रस्तावः एव इदानीम् अनुचितः। उपायेन कार्यं साधनीयम् इदानीम्। जयपुर्याः एकस्मिन् पार्श्वे अस्माकं राज्यम् अस्ति, अपरस्मिन् पार्श्वे अमृतपुरी अस्ति। अतः तस्य युद्धभीतिः एव नास्ति। एवं च बहोः कालतः जयपुर्याः रक्षणे अस्माभिः अप्रत्यक्षेण साहाय्यं क्रियमाणम् अस्ति। एतस्य प्रतिफलरूपेण प्रतिवर्षम् अस्मभ्यं धनं दातव्यम् इति शङ्करवर्मा वक्तव्यः। अस्माकं वचनं तिरस्कर्तुं शङ्करवर्मणः धैर्यं न स्यात् एव" इति।




* * * *

जयपुर्याम् इदानीं महान् उत्साहः। समग्रे देशे आनन्दोत्सवः आचर्यमाणः अस्ति। पूर्वजैः पूजिता रमणीया सुवर्णमयी दुर्गामूर्तिः प्राप्ता अस्ति इत्यतः शङ्करवर्मा नितरां सन्तुष्टः अस्ति। 'विग्रहस्य प्रतिष्ठापना करणीया' इति तेन निश्चयः कृतः। तदर्थं देवालयः अपि निर्मितः। मुहूर्तः अपि निश्चितः।

शङ्करवर्मा कदाचित् उद्याने विहरन् आसीत्। तावता कश्चन दूतः आगत्य निवेदितवान्– "प्रभो, शान्तिपुरतः कश्चन दूतः आगतः अस्ति" इति।

तदा आश्चर्यम् अनुभवन् शङ्करवर्मा भटम् उक्तवान्– "शान्तिपुरतः दूतः आगतः? अस्तु, तम् अन्तः प्रेषयतु" इति।

पुनः अल्पे एव काले कश्चन दूतः आगत्य शङ्करवर्माणं नमस्कृत्य– "प्रभो, वीरसिंहमहाराजः भवतः शुभम् आशंसन् ज्ञापयितुम् इच्छति यत् भवता यत् दातव्यं तत् अविलम्बेन प्रेषणीयम् इति" इति निवेदितवान्।

"मया दातव्यम्? तदप वीरसिंहाय! तादृशं किमपि न स्मर्यते खलु?" इति उक्तवान् शङ्करवर्मा।

"सुमेधराज्यस्य कारणतः एव भवतः राज्यं सुरक्षितं तिष्ठति। अतः ज्ञायते यत् भवतः राज्यस्य रक्षणे सुमेधराज्यं सहकुर्वत् अस्ति इति। एतद्विषये अद्यावधि किमपि न



दत्तम्। अतः पूर्वतनं यावत् भवति तावत् दातव्यम्। इतः परं प्रतिवर्षं नियतरूपेण दानं न विस्मरणीयम् इति वदति अस्माकं महाराजः" इति उक्तवान् दूतः।

"एवं वा?" इति उक्त्वा शङ्करवर्मा दूतं पृष्टवान्– "अस्तु, भवतः राजा अस्मत्तः इदानीं किम् इच्छति?" इति।

"भवता सद्यः या कनकदुर्गामूर्तिः प्रप्ता सा उपायनरूपेण अर्पिता चेत् महाराजः सन्तुष्टः भवेत्" इति उक्तवान् दूतः।

एतत् श्रुत्वा शङ्करवर्मा क्षणकालं स्तब्धः। अनन्तरं सः आत्मनः समतोलनं प्राप्य दूतम् उक्तवान्– "एतं विग्रहं दातुं मम नास्ति अधिकारः। पूर्वजैः पूजितस्य एतस्य विग्रहस्य स्वामिनः जनाः। प्रजानाम् आशयस्य अनुगुणम् एषः विग्रहः मन्दिरे प्रतिष्ठाप्यमाणः अस्ति। कालान्तरे अमृतपुरीराजस्य सुमेधराजस्य च सहकारेण विशालं मन्दिरं निर्मातव्यम् इत्यपि अस्ति विचारः। एषः विग्रहः कथं वा दातुं शक्यते?" इति।

"प्रभो, महाराजस्य आशयस्य निवेदनं दूतस्य मम कर्तव्यम्। महाराजस्य अन्तिमः सन्देशः यत् विग्रहः उपायनरूपेण न अर्प्यते चेत् दण्डोपायेन तस्य वशीकरणार्थं प्रयत्नः क्रियते इति। श्रुत्वा देवः प्रमाणम्" इति निवेदितवान् दूतः।

शङ्करवर्मा गाम्भीर्येण उक्तवान्– "सर्वं निर्णीतम् इत्येव भासते। कनकदुर्गाविग्रहस्य अर्पणम् अशक्यम् एव। एतत् वचनं महाराजं निवेदयतु। यदि अनिवार्यं स्यात् तर्हि विरोधम् अनिच्छद्भिः अस्माभिः किञ्चित् धनं दीयेत। सुमेधराजेषु केनाऽपि इतः पूर्वम् एवं न आचरितम्। सर्वं कलेः प्रभावः! दूतस्य भवतः पुरतः किम् अधिककथनेन? अस्माकम् आशयं भवान् वीरसिंहं यथावत् निवेदयतु" इति।

दूतः शङ्करवर्माणं नमस्कृत्य ततः निर्गतवान्।

* * * *

स्वराज्यं प्रत्यागतः सः दूतः देशस्य सीमायां प्रतीक्षमाणं सर्वदमनं दृष्ट्वा

शङ्करवर्मणः आशयं निवेदितवान्।

'कनकविग्रहार्पणं शङ्करवर्मणा निराकृतम्' इति ज्ञातवतः सर्वदमनस्य सन्तोषः एव। यतः तत्कारणतः युद्धस्य आरम्भः भविष्यति। अतः सः दलपतीन् उक्तवान्– "सेनां जयपुरीम् उद्दिश्य अग्रे नयन्तु। तत्र अस्माकम् अवरोधकं किमपि न भवेत्" इति।

तावता कश्चन उग्रः कण्ठस्वरः श्रुतः– "अलम् अग्रे गमनेन" इति।

सर्वदमनः आश्चर्येण कोपेन च परितः दृष्टिं प्रसारितवान्। तत्र निश्चलाः वृक्षगुल्मादयः दृश्यन्ते, न अन्यत् किमपि।

तावता कश्चन बाणः वेगेन आगत्य सर्वदमनात् अनतिदूरे भूमौ लग्नः। सर्वे सैनिकाः क्षणकालं भीत्या स्तब्धाः। सर्वदमनः बाणं स्वीकृत्य तत्र बद्धं पत्रम् उद्घाट्य परिशीलितवान्।

पत्रे एवं लिखितम् आसीत्– "जयपुर्याः शान्तेः भङ्गस्य प्रयत्नः मास्तु। आक्रमणं विस्मृत्य प्रतिगमनम् एव क्षेमाय। एतस्याः सूचनायाः उपेक्षा सर्वनाशकारिणी भवेत्। युवराजस्य सन्दीपकुमारस्य आज्ञा एषा" इति।

'युवराजस्य सन्दीपस्य आज्ञा! अश्रुतपूर्वं नाम खलु एतत्! विद्रोहिणाम् अपरः नायकः अपि अस्ति इति ज्ञातम्। कः एषः सन्दीपकुमारः? शत्रुः एषः मां प्रतिपदम्



अनुसरन् अस्ति इति ज्ञातम्। एवं स्थिते अग्रे सेनायाः नयनं कथम्? किन्तु भीत्या अहं यदि प्रतिगच्छेयं तर्हि वीरसिंहः मां यमसदनं प्रेषयेत्। अतः इदानीम् अग्रे गमनम् एव शरणम्' इति आलोच्य सर्वदमनः सैनिकान् आज्ञापितवान्– "अग्रे गच्छन्तु" इति।

* * * *

तस्मिन् दिने सायङ्काले जयपुर्यां प्रजाः विग्रहप्रतिष्ठापनोत्सवस्य सन्नाहे मग्नाः आसन्। वीरसिंहस्य दूतः शङ्करवर्माणं दृष्ट्वा गतः इति, विग्रहदानं शङ्करवर्मणा निराकृतम् इति वा प्रजाः न जानन्ति। अनन्तरदिने एव पूर्णिमा। पूर्णिमायां शुभे मुहूर्ते विग्रहस्य प्रतिष्ठापनम्। अत एव राजधान्यां महान् उत्साहः।



राजमार्गे अकस्मात् दृष्टिगोचरीभूतान् परदेशीयान् सैनिकान् दृष्ट्वा नागरिकाः आश्चर्यचकिताः। केचन कुतूहलेन तान् अनुसृतवन्तः। कश्चन युवकः धावन् गत्वा शङ्करवर्माणं शत्रुसैनिकागमनवार्तां निवेदितवान्।

एतत् श्रुत्वा चकितः शङ्करवर्मा भवनस्य पुरोभागम् आगतवान्। तावता ससैन्यः सर्वदमनः तत्र उपस्थितः आसीत्।

"किमर्थम् आगताः भवन्तः?" इति पृष्टवान् शङ्करवर्मा।

"कनकदुर्गाविग्रहं नेतुम्" इति उक्तवान् सर्वदमनः।

"स च विग्रहः दातुं न शक्यः इति अहं दूतद्वारा वार्तां प्रेषितवान् आसं खलु?" इति उक्तवान् शङ्करवर्मा।

"न दीयते चेत् वशीक्रियते। तदर्थम् एव आगताः वयम्" इति उक्तवान् सर्वदमनः।

'द्वारे उपस्थितस्य शत्रुसैन्यस्य सम्मुखीकरणेन वृथा रक्तपातः' इति आलोच्य शङ्करवर्मा उक्तवान्–"रक्तपातम् अहं न इच्छामि। स्वबुद्ध्या विग्रहं न दास्यामि च। इतः परं यत् उचितम् इति भवन्तः मन्यन्ते तत् कर्तुम् अर्हन्ति" इति।

सुवर्णविग्रहः कुत्र अस्ति इति जानन्तः गूढचराः सर्वदमनम् अग्रे नीतवन्तः। तत्र दुर्गाविग्रहः दृष्टः। सैनिकाः विग्रहम् उन्नीय प्रस्थितवन्तः।

तावता वीरसिंहेन प्रेषितः कश्चन दूतः सर्वदमनसमीपं गत्वा रहसि किमपि निवेदितवान्। विद्रोहिणः यथा न जानीयुः तथा सुवर्णविग्रहः केन मार्गेण सुमेधराज्यस्य अन्तः नेतव्यः इति मार्गं सूचितवान् आसीत् वीरसिंहः। 'नदीमार्गेण विग्रहः नीतः चेत् विरोधिनः सुलभतया अवरोद्धुं न अर्हन्ति' इति वीरसिंहस्य चिन्तनम् आसीत्। वीरसिंहसेन यथा सूचितं तथा, सैनिकैः सह नदीतीरे गतवान् सर्वदमनः।

सा च काचित् सामान्या नदी। नद्यां नौकायां द्वौ भटौ विग्रहं गृहीत्वा उपविष्टवन्तौ। चत्वारः नौकाचालने

उद्युक्ताः जाताः। नदीम् उभयतः आयुधधारिणः सैनिकाः नौकाम् अनुसरन्तः रक्षणं कुर्वन्तः आसन्। सर्वदमनः विजयगर्वेण गच्छन् अस्ति।

किञ्चिद्दूरं यदा गतं तदा तीरद्वये प्रवृद्धौ वटवृक्षौ प्राप्तौ। तयोः शाखाः नदीम् आवृत्य तिष्ठन्ति। मार्गे विघ्नभूतौ तौ वृक्षौ निन्दन्तः सैनिकाः परिक्रम्य अग्रे पदानि स्थापितवन्तः। तावता अनतिदूरे एव स्फोटकानां स्फोटनम् आरब्धम्। वर्णमयः प्रकाशः दृष्टः। फटफटेति शब्दः श्रुतः च। सर्वे सैनिकाः आश्चर्येण कुतूहलेन च स्फोटकस्फोटनं पश्यन्तः सन्ति।

तावता वृक्षयोः शाखानां मध्यतः नौकासमीपम् आगच्छन् कश्चन पिशाचाकारः दृष्टः। विग्रहरक्षणोद्युक्ताः सैनिकाः पिशाचपातात् आत्मनः रक्षणं चिन्तयन्तः आसन्।

अत्रान्तरे नौकास्थः दुर्गाविग्रहः पिशाचेन मायया इव नीतः। अविचिन्तिततया एतया घटनया नौकायां स्थिताः सैनिकाः दिग्भ्रान्ताः जाताः।

'वृक्षयोः बद्धायाः रज्ज्वाः साहाय्येन अधः आगत्य, पिशाचवेषेण अस्मासु भ्रान्तिम् उत्पाद्य लीलया कोऽपि युवकः विग्रहम् उन्नीय अपरं तीरं प्राप्तवान्' इति क्षणद्वयस्य अनन्तरं ज्ञातं सैनिकैः। तीरस्थाः सैनिकाः तु रक्षणकार्यं विस्मृत्य स्फोटकस्फोटनं कुतूहलेन पश्यन्तः आसन्।

नौकास्थाः सैनिकाः उत्थाय बाहू प्रसार्य उच्चध्वनिना– "अहो, हा हन्त! विग्रहः चोरितः। चौर्यं, चौर्यम्" इति आक्रन्दनं कृतवन्तः। किन्तु तावता एव सः विग्रहचोरः तीरे पूर्वम् एव स्थापितम् अश्वम् आरुह्य वेगेन अरण्यं प्रविष्टवान् आसीत्।

नौकास्थाः तीरस्थाः च सैनिकाः अश्वस्य उपरि उपविश्य वेगेन गच्छन्तं युवकम् आश्चर्येण पश्यन्ति। तस्य ग्रहणार्थं प्रयत्नः करणीयः इत्यपि विस्मृतम् अस्ति तैः।

– (अनुवर्तते)






# मञ्जीरकुमारी

मध्यरात्रे श्मशानमार्गे गमनम् एव आत्मनः प्रवृत्तिम् इव भावयन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च।

तदा शवान्तर्गतः वेतालः अवदत्– "अये महाराज! यः भवतः प्रयत्नं जानाति सः भवतः प्रशंसाम् अवश्यं कुर्यात् एव। याभ्यः भवता भीतिः प्राप्तव्या आसीत् ताः एव शक्तयः इदानीं भवत्तः बिभ्यति इति अहं भावयामि। एवं स्थिते अपि भवान् कार्यदीक्षाविषये प्रमादं न कुर्यात् इति वक्तुं मम धैर्यं नास्ति। यतः कार्यदीक्षाविषये प्रमादः मनुष्यमात्रस्य स्वभावः। राजकुमारी मञ्जीरकुमारी अत्र प्रत्यक्षम् उदाहरणम्। यस्याः विवेकः बुद्धिमत्ता च सर्वैः श्लाघ्यते स्म, सा एव मञ्जीरकुमारी औचित्यप्रज्ञां स्वकुलहितं च

## वेतालकथा



सर्वथा विस्मृत्य स्वदेशं पितरं च शत्रुपक्षाधीनं कृतवती। तस्याः कथायाः श्रवणेन मार्गायासपरिहारः विवेकः चापि प्राप्येत भवता। अतः मया उच्यमानां कथां श्रद्धया शृणोतु तावत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा—

पूर्वं कौशाम्बीदेशं धीरसिंहः नाम राजा पालयन् आसीत्। तस्य एकमात्रपुत्री मञ्जीरकुमारी। पुत्रीं सर्वस्वं भावयति स्म राजा धीरसिंहः। अतः सः तां सर्वेषु शास्त्रेषु पारङ्गतां कृतवान् आसीत्। आत्मना सहैव स्थापयन् तां राजकार्यदक्षाम् अपि कृतवान् आसीत् सः।

यथा धीरसिंहस्य तथैव मञ्जीरकुमार्याः अपि मृगयायां विशेषासक्तिः। कदाचित् सा पितरं विना एव धीराभिः सखीभिः सह मृगयार्थम् अरण्यं गच्छति। एवं गमनसमये अङ्गरक्षकः अवश्यं नेतव्यः इति राज्ञा नियमः कृतः आसीत्।

'पिता मम सामर्थ्ये पूर्णतः न विश्वसिति। अतः एव अङ्गरक्षकं नियोजितवान् अस्ति सः' इति खेदम् अनुभवति मञ्जीरकुमारी। 'कदाचित् वा एकाकितया गत्वा मृगयाविहारः करणीयः' इति तस्याः प्रबला इच्छा।

अतः सा एकदा पुरुषवेषं धृत्वा आप्तसखीं केवलं निवेद्य मृगयार्थं समीपस्थम् अरण्यं प्रति निर्गतवती।

आदिनम् उत्साहेन मृगयाविहारं कृत्वा सायङ्कालसमये सा अरण्यसीमां प्राप्तवती। 'इतः परं प्रतिगमनं वरम्' इति आलोच्य ततः प्रतिनिवृत्ता सा मेघच्छन्नं सूर्यरहितम् आकाशं दृष्ट्वा विह्वला जाता।

तावता समीपतः एव प्रश्नः श्रुतः— ''कः तत्र?'' इति।

निर्जने अरण्ये एतादृशं प्रश्नम् अकस्मात् श्रुत्वा मञ्जीरकुमारी चकिता। समीपे एव गुल्मस्य पार्श्वे तया काचित् मानवाकृतिः दृष्टा। शिरसि जटारूपम् आपन्नाः केशाः, मुखे च लम्बमानानि श्मश्रूणि च तया दृष्टानि। किन्तु कस्य मुखम् एतत् इति तु तया स्पष्टं न अभिज्ञातम्।

राजकुमारी राजनीतिनिपुणा एव खलु? अतः तस्याः मनसि प्रबलः सन्देहः उत्पन्नः– 'निर्जने अरण्ये तिष्ठन् एषः शत्रुपक्षीयः स्यात् वा?' इति।

'यथाकथं वा भवतु, इदानीम् आत्मन स्वरूपस्य गोपनं वरम्' इति आलोच्य सा कण्ठस्वरं परिवर्त्य– "अहं कश्चन सैनिकः। युवराज्ञ्याः आज्ञानुसारम् अत्र आगतवान्। एतत् अरण्यं मृगयाविहारार्थम् अर्हं वा इति परीक्ष्य निवेदनीयं मया। इदानीं कथमपि मार्गभ्रष्टः सन् चिन्ताकुलः अस्मि। तदस्तु, भवान् कः? किमर्थम् अत्र वासः भवतः?" इति पृष्टवती।

तदा सः अपरिचितः– "किम् अनपेक्षितवार्तालापेन? रात्रिः आसन्ना। अद्य रात्रौ भवान् अतिथित्वेन मम कुटीरे वसतु। श्वः नगरं प्रति मार्गं प्रदर्शयिष्यामि" इति उक्त्वा अग्रे प्रस्थितवान्।

'इदानीम् एतस्य अनुसरणम् उचितं स्यात् वा?' इति क्षणकालं चिन्तितवती राजकुमारी। अनन्तरं धैर्येण तस्य पृष्ठतः अश्वं चालितवती सा।

सः अपरिचितः कुटीरं प्रविश्य दीपशिखां ज्वालयित्वा आनीतवान्। दीपस्य प्रकाशे सा तस्य मुखं सम्यक् अवलोकितवती। तेजस्विनि मुखे तीक्ष्णे नेत्रे प्रकाशेते। 'एतस्य पुरतः भावस्य आकारस्य वा गोपनं व्यर्थं स्यात्' इति आलोचितवती मञ्जीरकुमारी।

"इतोऽपि रात्रेः प्रथमः यामः। भवती श्रान्ता लक्ष्यते। अतः सम्यक् विश्रान्तिसुखम्





सूचिते स्थले उपविश्य तेन आनीतानि फलानि खादित्वा क्षीरं पीतवती।

"इतः परं भवती मम परीक्षां कर्तुम् अर्हति" इति वदन् सः युवकः जटाजूटं श्मश्रु च अपसारितवान्।

"कः भवान् इति, केन उद्देशेन अत्र तिष्ठति इति च न ज्ञातं मया। यदि भवत आशयः मया ज्ञायेत, स च यदि उत्तमः स्यात्, तर्हि अहम् अपि यथाशक्ति साहाय्यं कुर्याम्" इति उक्तवती मञ्जीरकुमारी।

"अनन्तरकाले वचनात् भ्रष्टा न भवेत् खलु भवती?" इति सन्देहेन पृष्टवान् सः युवकः।

"वचनपालनं मम धर्मः। अस्थाने भीतिः मास्तु भवतः" इति उक्तवती मञ्जीरकुमारी।

"मम नाम विजयदत्तः इति" इति उक्त्वा मौनम् आश्रितवान् सः।

नामश्रवणेन निश्चेष्टा जाता राजकुमारी। चतुर्भ्यः वर्षेभ्यः पूर्वं प्रवृत्ता काचित् घटना तस्याः स्मृतिपथम् आगता।

कौशाम्बीदेशस्य उत्तरस्यां दिशि चन्दनदेशः नाम लघुदेशः अस्ति। तद्देशीयः राजा धीरसिंहस्य सामन्तः। चतुर्भ्यः वर्षेभ्यः पूर्वं चन्दनदेशराजः धीरसिंहाय दातव्यम् उपायनधनं स्थगितवान् आसीत्। अतः क्रुद्धः धीरसिंहः चन्दनदेहं स्वाधीनीकृतवान् आसीत्। एतत् अपमाननं सोढुम् अशक्तः

अनुभवतु राजकुमारि" इति उक्तवान् सः अपरिचितः।

"किमिति सम्बोधनम्? राजकुमारि इति? कथम् एतत्?" इति आश्चर्येण पृष्टवती राजकुमारी।

तदा सः अपरिचितः युवकः मन्दहासपूर्वकम् उक्तवान्– "यथा भवती राजनीतिचतुरा, तथा अहम् अपि लौकिकज्ञानचतुरः। अतः असत्यकथनस्य आवश्यकता नास्ति अत्र। वार्तालापार्थम् एषः न समयः। भवती नितरां श्रान्ता अस्ति। प्रथमं मम आतिथ्यं स्वीकृत्य विश्रान्तिसुखम् अनुभवतु" इति।

मञ्जीरकुमारी मौनं स्थितवती। युवकेन

चन्दनदेशस्य राजा विरूपाक्षः आत्महत्यया इहलोकव्यापारं समापितवान् आसीत्। पतिम् अनुसरन्ती महाराज्ञी अपि चिताम् आरूढवती आसीत्।

एतत्सर्वं यदा प्रवृत्तं तदा विरूपाक्षस्य एकमात्रपुत्रः विजयदत्तः देशाटनमग्नः आसीत्। अतः तेन एताः सर्वाः घटनाः विलम्बेन ज्ञाताः। 'स्वराज्यं प्रत्यागतः विजयदत्तः प्रतीकारार्थं प्रयत्नं कुर्यात्' इति सम्भावयन् धीरसिंहः विजयदत्तस्य अन्वेषणार्थं गूढचरान् नियोजितवान् आसीत्।



सर्वेषु विषयेषु धीरसिंहः पुत्र्याः आशयं पृष्ट्वा एव अग्रे पदं स्थापयति स्म। किन्तु चन्दनदेशस्य वशीकरणसन्दर्भे सः पुत्रीं न निवेदितवान् एव। 'पितुः एषः व्यवहारः अन्याय्यः' इति भावयन्ती मञ्जीरकुमारी स्वस्य अभिप्रायं पितरं निस्सङ्कोचं निवेदितवती आसीत्।

तदा धीरसिंहः उक्तवान् आसीत्– "पुत्रि! भवत्याः अनुभवः इतोऽपि न पर्याप्तः। विरूपाक्षः ऐदम्प्राथम्येन एवं राजविरोधं न कृतवान्। इतः पूर्वं द्वित्रवारं तेन एवं व्यवहृतम्। अतः एव मया कठोरः क्रमः आश्रितः। क्षमायाः अपात्रम् आसीत् सः। 'भवान् मया दत्तेन धनेन यत् प्रजाहितकार्यं करोति तत् अहम् एव स्वयं करोमि' इति वदन् सः मां धिक्कृतवान् आसीत्। अन्यच्च गुप्तरूपेण तेन सेना सज्जीक्रियमाणा अपि आसीत् इति श्रुतं मया। अतः एव एषः क्रमः अनुष्ठितः" इति।

एतत्सर्वं स्मृत्वा मञ्जीरकुमारी मौनम् आश्रितवती इति जानन् विजयदत्तः उक्तवान्– "राजकुमारि, सन्देहः किमर्थम्? भवत्या वशीकृतस्य चन्दनदेशस्य उत्तराधिकारी विजयदत्तः अहम् एव" इति।

इदानीं किं करणीयम् इति न ज्ञातं राजकुमार्या। सा मौनम् आश्रितवती। अनन्तरं तौ उभौ अपि सुप्तवन्तौ।

अनन्तरदिने प्रातः विजयदत्तः राजकुमारीं नगरपर्यन्तं प्रापय्य विना वचनं प्रतिगतवान् आसीत्।



विजयदत्तस्य परिचयं प्राप्य मञ्जीरकुमारी अरण्यात् प्रत्यागतवती खलु? सा अरण्ये जातं विजयदत्तस्य दर्शनं पितरम् अन्यं वा न निवेदितवती एव। 'अरण्ये मार्गभ्रष्टा अहं वृक्षस्य अधः शयाना रात्रिं यापितवती। प्रातः उत्थाय अत्र आगता' इति असत्यम् उक्तवती सा।

ततः एकमासाभ्यन्तरे विजयदत्तः कोसलसेनया सह आगत्य मन्दाकिनीम् अतिक्रम्य कौशाम्बीदेशस्य उपरि आक्रमणं कृतवान्। एतस्मिन् युद्धे धीरसिंहस्य पराजयः अभवत्।

जयं प्राप्तवान् विजयदत्तः धीरसिंहं न अपमानितवान्। अपि तु गौरवेण एव व्यवहरन् सः उक्तवान्– "महाराज, प्रतीकारसाधनं मम उद्देशः न आसीत्। मातृभूमिः स्वतन्त्रा स्यात् इति उद्देशेन मया कार्यं प्रवृत्तम्। इदानीं मम देशः स्वतन्त्रः अस्ति। एतावता अहं तृप्तः। भवदीयं राज्यं भवदधीनम् एव करोमि। भवान् यथापूर्वं कौशाम्बीदेशं पालयतु। चन्दनदेशस्य स्वतन्त्रः राजा सन् अहं भवतः स्नेहम् इच्छामि" इति।

तदा धीरसिंहः अश्रुपूर्णनेत्रः सन्– "भवतः पितुः विषये मया अन्याय्यम् आचरितम्। अतः अहं द्वादश वर्षाणि यावत् भवतः सामन्तः भविष्यामि। तावदेव न, मम राज्ये अमूल्यं यत् अस्ति तदपि उपायनरूपेण

कौशाम्बीदेशस्य प्रतिवेशी कोसलदेशः। तस्य राजा विनयसेनः। विजयदत्तस्य पिता विरूपाक्षः विनयसेनश्च सहपाठिनौ। अन्यच्च तयोः गाढा मैत्री अपि आसीत्। धीरसिंहेन चन्दनदेशः वशीकृतः यत्, राज्यभ्रष्टः विरूपाक्षः आत्महत्यया प्राणान् त्यक्तवान् यत्, राज्ञी चितारोहणं कृतवती यत्, तत्सर्वं स्मरन् विनयसेनः चिन्ताक्रान्तः जातः आसीत्। 'अवकाशे प्राप्ते, अहम् अवश्यं भवतः साहाय्यं करिष्यामि' इति विजयदत्तम् उक्तवान् आसीत् सः। गूढचरद्वारा एषा वार्ता अपि ज्ञाता आसीत् धीरसिंहेन। अतः सः विजयदत्तस्य बन्धनविषये बहुधा प्रयत्नं कुर्वन् आसीत्।

भवते दास्यामि। भवान् मत्तः यत् इच्छति तत् वदतु'' इति उक्तवान्।

तदा विजयदत्तः– ''सम्प्रार्थ्य यत् प्राप्यते तत् उपायनं भवितुं न अर्हति। अतः अहं किमपि न प्रार्थयामि। सर्वेषु राजकार्येषु भवान् पुत्र्याः आशयं पृष्ट्वा तदनुगुणं व्यवहरति खलु? एतस्मिन् विषये अपि तथैव करोतु'' इति उक्तवान्।

मञ्जीरकुमारी पार्श्वे एव स्थित्वा सर्वं कुतूहलेन श्रुतवती आसीत्। राजा धीरसिंहः यदा प्रश्नार्थकदृष्ट्या पुत्रीं दृष्टवान् तदा सा पृष्टवती– ''तात! भवान् राजा सन् उपायनं दातुम् इच्छति, उत वैयक्तिकरूपेण?'' इति।

धीरसिंहः क्षणकालम् आलोच्य– ''पराजितेन मया राजत्वं स्मरता दातव्यं किमपि नास्ति। एतस्य व्यवहारस्य औन्नत्यं दृष्ट्वा नितराम् सन्तुष्टः अस्मि। अतः वैयक्तिकरूपेण एव किमपि दातुम् इच्छामि'' इति उक्तवान्।

तदा मञ्जीरकुमारी शिरः अवनमय्य मन्देन स्वरेण पितरम् उक्तवती– ''भवान् तु युवत्याः मम पिता। मयि भवतः असीमा प्रीतिः। कन्यारत्नं भवान् अमूल्यं प्रीतिपात्रं च भावयति। अतः तस्यैव दानम् इदानीं शोभते'' इति।

धीरसिंहः पुत्र्याः आन्तर्यं जानन् मन्दहासपूर्वकं– ''वत्से! युक्तम् उक्तं भवत्या। भवत्याः हृद्गतं ज्ञातुम् एव



विजयदत्तेन तथा उक्तम् आसीत् इति अहं भावयामि'' इति पुत्रीम् उक्त्वा पुनः विजयदत्तम् उक्तवान्– ''येन आशयेन भवान् मां तथा उक्तवान् स च सिद्धः। प्रीतिपात्रं कन्यारत्नं दीयते भवते। कृपया स्वीकरोतु एतत् उपायनम्'' इति।

पुनः अल्पे एव काले मञ्जीरकुमारी-विजयदत्तयोः विवाहः सवैभवं सम्पन्नः।

एवं कथां समाप्य वेतालः पुनः अवदत्– ''अये राजन्! विजयदत्तस्य सौन्दर्येण आकृष्टा मञ्जीरकुमारी अरण्ये जातं तदीयं दर्शनं पितरं न उक्तवती एव। एवं ननु? किन्तु विजयदत्तः सज्जनः इत्यतः सर्वं

मङ्गलमयं जातम्। अन्यथा सर्वम् अनिष्टकरम् अभविष्यत्। एवं न वा? राजनीतिं जानती मञ्जीरकुमारी किमर्थम् एवम् अविवेकेन व्यवहृतवती? विजयदत्तः मञ्जीरकुमार्याः कुलगोत्रादिकं जानन् अपि किमर्थं तां राजधानीं सुरक्षितं प्रेषितवान्? एतत् कृत्यं मूले कुठारः न अभविष्यत् वा? एतेषां सर्वेषां सन्देहानां योग्यम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा त्रिविक्रमः एवम् उक्तवान्– "यान् विषयान् मूर्खाः महता प्रयत्नेन अपि अवगन्तुं न शक्नुवन्ति तान् विषयान् मेधाविनः विना वचनम् एव अवगच्छन्ति। मञ्जीरकुमारी विजयदत्तश्चापि मेधाविनौ। परस्परयोः अनुरागः परस्परं ज्ञातः आसीत्। 'मयि अनुरक्ता मञ्जीरकुमारी मदाघातकारकं कृत्यं न करिष्यति। अतः सा मम स्थितिम् अनुरागं वा पितरं न निवेदयिष्यति' इति जानाति स्म विजयदत्तः। अतः सः तां राजधानीं सुरक्षितं प्रेषितवान्। मञ्जीरकुमार्या अपि औचित्येन एव व्यवहृतम्। विजयदत्तस्य वासं यदि सा पितरं निवेदितवती स्यात् तर्हि धीरसिंहः तस्य ग्रहणार्थं उद्युक्तः अभविष्यत्। तदा विनयसेनः विजयदत्तस्य साहाय्यार्थम् आगमिष्यत्। तदा प्रचलिष्यमाणे घोरे युद्धे महती प्राणहानिः धनहानिः च अभविष्यत्। किन्तु लाभः तु शून्यः एव। अतः एव मञ्जीरकुमारी विजयदत्तस्य सज्जनत्वे विश्वस्य मौनं स्थितवती। अन्ते तया यथा तर्कितं तथा जातम्। स्वराज्यप्राप्त्या विजयदत्तः तृप्तः। महत् औदार्यं प्रदर्श्य धीरसिंहस्य हृदयं जित्वा अनुरागपात्रभूतां मञ्जीरकुमारीं प्राप्तवान् सः। एवं सर्वं मङ्गलमयं जातम्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



## चन्दमामानुबन्धः-२४

# ज्ञानभाण्डागारम्

## सा का स्यात्?

**१६** शतकस्य आरम्भे गुजरातराज्यस्य शासकः बहादुरशाहः महत्या सेनया सह आगत्य चित्तौडदुर्गम् आक्रान्तवान्। दौर्भाग्यं नाम तेषु दिनेषु मेवाडराजः तीव्रम् अस्वस्थः आसीत्। अतः शासनप्रमुखाः मिलित्वा चिन्तनं कृतवन्तः यत् इदानीं किं करणीयम् इति। तत्समये प्रधानमन्त्री उक्तवान्– "इदानीं राजा तु अस्वस्थः। सेनायाः नायकत्वं निर्वोढुं कोऽपि अन्यः नास्ति। अतः अस्माकं पराजयः निश्चितः" इति।

तदा वातायनद्वारा कश्चन गम्भीरः स्त्रीस्वरः आगतः– "शत्रुसेना अस्माकं सेनायाः अपेक्षया अपि विशाला। सर्वविधसन्नाहं कृत्वैव अस्माकं दुर्गं वशीकर्तुम् आगता अस्ति शत्रुसेना। अतः अस्माकं जयः सन्देहास्पदम् एव। किन्तु 'नायकत्वं चित्तौडदुर्गे नास्ति' इति अपवादम् अहं न सहे। अतः अहं सेनायाः नायकत्वं निर्वहामि" इति।

वदन्तु, एवम् उक्तवती धीरा सा का स्यात्?

(उत्तरं ३६तमे पृष्ठे)

## भवन्तः जानन्ति वा?

१. इण्डोनेशियादेशे मलेशियादेशे च कः हिन्दूराजः महत् साम्राज्यं स्थापितवान् आसीत्?
२. तस्य राज्ञः राजधानी का आसीत्?
३. कः तिबेट्देशीयः राजा बौद्धधर्मं स्वीकृत्य तस्य प्रचारम् अपि कृतवान्? एषा घटना कदा प्रवृत्ता?
४. तेन निर्मितस्य नगरस्य नाम किम्?
५. तेन राज्ञा भारतं प्रति प्रेषितस्य राजदूतस्य नाम किम्?

(उत्तराणि ३६तमे पृष्ठे)

# श्रावस्तीनगरम्

उत्तरप्रदेशराज्ये रापतीनद्याः तीरे सहेत-महेतग्रामसमीपे पुरातनस्य श्रावस्तीनगरस्य अवशेषाः प्राप्ताः सन्ति। श्रावस्तीनगरम् इक्ष्वाकुवंशीयेन राज्ञा श्रावस्तेन निर्मितम् आसीत्। अतः एव श्रावस्ती इति नाम आगतम्। पुराणेषु ऐतिहासिकग्रन्थेषु बौद्धग्रन्थेषु च एतस्य नगरस्य उल्लेखः बहुधा कृतः दृश्यते।




गौतमबुद्धस्य काले एतत् नगरं कोसलदेशस्य राजधानी आसीत्। तदा प्रसेनजित् नाम राजा शासनं करोति स्म। विशालैः मार्गैः रमणीयैः उद्यानैः च युक्तम् एतत् नगरं मनोहरम् आसीत्। एतस्मिन् नगरे बहवः प्रसिद्धाः वणिजः निवसन्ति स्म। तेषु सुदत्तः नाम वणिक् सुविख्यातः, योऽयम् अनन्तरकाले गौतमबुद्धस्य शिष्यः जातः। सुदत्तस्य प्रार्थनां पुरस्कुर्वन् गौतमबुद्धः कानिचन दिनानि यावत् श्रावस्तीनगरे स्थितः आसीत्। अनन्तरकाले अत्र सुविशालः बौद्धारामः स्थापितः अभवत्।

अङ्गुलिमालः नाम कुख्यातः लुण्ठाकः श्रावस्तीसमीपे अरण्ये निवसति स्म। एषः पान्थान् लुण्ठयित्वा तेषाम् अङ्गुलीः कर्तयित्वा मालारूपेण कण्ठे धरति स्म। 'सहस्रम् अङ्गुलयः ध्रियन्ते मया' इति तेन प्रतिज्ञा कृता आसीत्। राजा प्रयतमानः आसीत् यत् अङ्गुलिमालः कथमपि ग्रहीतव्यः इति। राज्ञः एतं प्रयत्नं पुत्रं निवेदयितुं तदीया माता अरण्यम् आगता आसीत्। स्वप्रतिज्ञायाः पूरणार्थम् अङ्गुलिमालेन एका अङ्गुलिः अपेक्ष्यते स्म। अतः सः स्वस्य मातुः अङ्गुलिम् एव कर्तयितुम् उद्युक्तः। तावता तत्र आगतः बुद्धः स्वकीयैः उपदेशैः तस्य हृदये परिवर्तनम् आनीतवान्। तम्

# र स वा र्ता:




अहिंसामार्गानुयायिनं कृतवान् च। पश्चात्तापेन दग्धः अभवत् अङ्गुलिमालः। बौद्धभिक्षुत्वं प्राप्य श्रावस्तीनगरस्य मार्गेषु गच्छन्तं तं लुण्ठाकाङ्गुलिमालत्वेन अभिजनन्तः पौराः, तम् उद्दिश्य पाषाणान् क्षिप्तवन्तः। किन्तु अङ्गुलिमालः अल्पम् अपि विरोधं न प्रकटितवान्। जनानां पीडनेन ताडनेन च सः गतप्राणः जातः।

सहेत-महेतग्रामसमीपे प्राप्ताः अवशेषाः श्रावस्तीनगरस्य वैभवं कथां च स्मारयन्ति।

## वेदनासहनशक्तिः

व्रणात् व्याधितः वा शरीरस्य वेदना भवति खलु कदाचित्। किन्तु समानस्तरीयाः व्याधिव्रणादयः सर्वेषु समानां वेदनां जनयन्ति इति न। अनुभवितुः मानसिकी स्थितिः एव अत्र कारणम् उच्यते। ओहियोविश्वविद्यालये शशान् आधारीकृत्य कृतानां प्रयोगाणां फलतः एषः अंशः निश्चितः अस्ति। ये शशाः प्रेम्णा पालिताः आसन् तेषां वेदनासहनशक्तिः इतरेषाम् अपेक्षया अपि अधिका दृष्टा।






## अष्टवर्षीया बाला एस्.एस्.सि. परीक्षार्थं सन्नद्धा!

पश्चिमबङ्गालस्य आड्राप्रदेशीया चक्रवर्ति-कुलजाता मौसमीनामिका बालिका एस्.एस्.सि परीक्षायाः पाठ्यक्रमम् अवगतवती अस्ति। यदि परीक्षाचालकसंस्थायाः विशेषानुमतिः लभ्येत तर्हि एषा परीक्षाम् उत्तरेत्।

## सम्पादयेम वयं साहित्यज्ञानसम्पदम्

१. मिश्रदेशीयः अतिप्राचीनः ग्रन्थः कः?

२. 'इतिहासनिर्मातृपितामहः' इति नाम्ना ख्यातः कः?

३. फ्रेञ्चविद्रोहस्य प्रेरणादाता ग्रन्थकर्ता कः?

४. तस्य ग्रन्थानां वैशिष्ट्यं किम्?

५. नवदशे शतके कस्य फ्रान्स्ग्रन्थस्य प्रचारः अत्यधिकः आसीत्? तस्य ग्रन्थस्य लेखकः कः?

# उत्तराणि

### सः कः स्यात्?

मेवाडराज्ञी कर्णावती।

### सामान्यज्ञानम्

१. श्रीविजयः।

२. सुमात्राद्वीपस्थं पालेमबैङ्गनगरम्।

३. स्ट्रांग्-त्सान्-गैस्पो।

४. तिबेट्राजधानी लासा।

५. तोनमी शम्भोत्रा इति। एषः भारतात् बौद्धधर्मग्रन्थान्, तिबेट्लिप्याः आधारभूतां देवनागरीलिपिं च स्वदेशं प्रति नीतवान्।

### साहित्यज्ञानम्

१. 'मृतात्मग्रन्थः'।

२. हेराडोटस्। (क्रि.पू. ४८४-४२५)।

३. वाल्टेर्।

४. काकूक्ति (व्याजोक्ति) प्राधान्यम्।

५. 'लेस् मिजरबल्स्' ग्रन्थस्य। विक्टर् ह्यूगो।



# श्रीरामकृष्णपरमहंसः
## (५)

विभूतिपुरुषेण तोतापुरिवर्येण यानि वेदान्ततत्त्वानि बोधितानि तानि अविश्वसनीयेन वेगेन ज्ञातवान् श्रीरामकृष्णः। एतत् दृष्ट्वा तोतापुरिवर्यः महत् आश्चर्यम् अनुभूतवान्।

एतस्मिन् घट्टे रामकृष्णवर्यस्य जीवनस्य वैशिष्ट्यं अन्यैः स्फुटतया ज्ञायते स्म। कदाचित् सः नदीतीरे उपविष्टः आसीत्। नद्यां नौकायां स्थिताः नाविकाः अन्यं नाविकं ताडितवन्तः। एतत् दृष्टवतः रामकृष्णवर्यस्य मुखात् आक्रन्दनम् उद्गतम्। तस्य पृष्ठभागे ताडनात् जाताः व्रणाः दृश्यन्ते स्म अपि।





तोतापुरिवर्यस्य मार्गदर्शनतः अद्वैतानुभवं प्राप्तवान् रामकृष्णवर्यः इस्लाम्धर्मस्य तत्त्वानां ज्ञाने कुतूहली जातः। महत्या भक्त्या श्रद्धया च सः इस्लाम्धर्मस्य तत्त्वानि अधीत्य अवगतवान्, तृप्तिं प्राप्तवान् च।



कदाचित् मथुरानाथः काशीयात्रार्थम् उद्युक्तः। तदा रामकृष्णवर्यः इच्छां प्रकटितवान् यत् अहम् अपि काशीम् आगच्छामि इति। मथुरानाथेन अङ्गीकारः प्रदर्शितः। रामकृष्णवर्यः तैः सह नौकाम् आरुह्य काशीं प्रस्थितवान्। यदा वाराणसी आसन्ना तदा रामकृष्णवर्येण सा नगरी स्वर्णपुरी इव दृष्टा। व्यक्तरूपायाः वाराणस्याः अव्यक्तम् अध्यात्मस्वरूपं दृष्टम् आसीत् तेन।

विश्वनाथमन्दिरस्य केदारनाथमन्दिरस्य च दर्शनसमये रामकृष्णवर्यः आत्म-विस्मृतिपूर्वकं ध्यानमग्नः भवति स्म। सर्वे यथा मूर्तेः बाह्यं स्वरूपं पश्यन्ति तथा रामकृष्णवर्यः दैविकांशानां दर्शनं प्राप्नोति स्म।





वाराणसीनिवासिनः, तत्समये सुविख्यातस्य, त्रैलिङ्गस्वामिनः दर्शनम् अपि प्राप्तं रामकृष्णवर्येण। तस्मिन् महात्मनि अपूर्वाः शक्तयः आसन्। तथापि सः शिशुवत् दृश्यते स्म। तस्मिन् श्रेष्ठे पुरुषे शिवस्य अंशान् पश्यन् रामकृष्णवर्यः प्रीत्या तं पायसं पायितवान्।

रामकृष्णवर्यस्य भागिनेयः सदा तेनैव सह तिष्ठन् तदीयां सेवां करोति स्म। कदाचित् तस्य मनसि विचारः उत्पन्नः यत् रामकृष्णवर्येण मद्ग्रामम् आगत्य दुर्गापूजा कृता चेत् वरं स्यात् इति। सः स्वस्य विचारं रामकृष्णं निवेदितवान्। रामकृष्णवर्यः उक्तवान् यत् अहं पूजासमये कथमपि उपस्थास्यामि इति। तथैव पूजासमये दुर्गादेव्याः पार्श्वे आत्मानं प्रदर्श्य तं भागिनेयं प्रसन्नं कृतवान् रामकृष्णवर्यः।





रासमणिदेव्याः बन्धुः मथुरानाथः १८७१तमे वर्षे जुलैमासे तीव्रम् अस्वस्थः जातः। तत्समये सः कालीघाट्प्रदेशे आसीत्। कदाचित् रात्रिसमये दक्षिणेश्वरे ध्याने लीनः रामकृष्णवर्यः मध्ये नेत्रे उन्मील्य उक्तवान् यत् भक्तः मातुः पादम् आश्रितवान् इति। वस्तुतः तु मथुरानाथस्य मरणवार्ता कालीघाट्तः तत्र तावता अपि न आगता आसीत्।

१८७१तमे वर्षे रामकृष्णवर्यस्य पत्नी शारदादेवी दक्षिणेश्वरम् आगता आसीत्। सा निश्चितवती यत् यतः अहं महापुरुषस्य पत्नी अस्मि, अतः मया अपि आध्यात्मिकं जीवनं यापनीयम् इति। अतः सा पत्युः चरणयोः आत्मानं समर्पितवती।





कस्याञ्चित् रात्रौ रामकृष्णवर्यः शारदादेवीं भगवतीं भावयन् पुष्पैः ताम् अर्चितवान्। वस्तुतस्तु पूजाव्याजेन रामकृष्णवर्येण शारदादेव्यां काश्चन आध्यात्मशक्तयः अन्तर्भाविताः आसन्।

रामकृष्णवर्यस्य बैबल्‌विषये अपि आदरः आसीत्। कदाचित् सः शिशुं क्रिस्तम् अङ्के उन्नीय स्थितां मेरीमातुः चित्रं दृष्टवान्। तदा तेन अनुभवः प्राप्तः यत् विशिष्टः कश्चन प्रकाशः तस्मात् चित्रात् आगत्य स्वशरीरं प्रविष्टः इति।





इतः दिनत्रयस्य अनन्तरं रामकृष्णवर्यः कदाचित् वृक्षस्य अधः उपविष्टः आसीत्। तदा कश्चन तेजस्वी पुरुषः आगत्य रामकृष्णवर्यं दृढम् आलिङ्गितवान्, अनन्तरं तस्मिन् एव लीनः जातः च। एवं विलीनः स्वयं येसुक्रिस्तः एव इति ज्ञातवान् रामकृष्णवर्यः।

— (आगामिसञ्चिकायां समाप्यते)



# महाराजयोगः

ठाकुरवंशीयाः राजानः पूर्वं बुन्देलखण्ड-राज्यं पालयन्तः आसन्। कालान्तरे अन्यवंशीयाः राजानः जाताः। ठाकुरवंशीयाः च निर्धनाः जाताः। रूपसिंहः ठाकुरवंशे जातः। किन्तु तस्य इदानीं न सम्पत्तिः, न भूमिः, न वा उत्तमं गृहम्। कुटीरसदृशे लघुगृहे निवसति सः। गोणीद्वयं तस्य शय्या। काष्ठविक्रयणेन जीवति सः।

रूपसिंहः प्रातः एव अरण्यं गच्छति। मध्याह्नपर्यन्तं यथाशक्ति काष्ठानि सङ्गृह्णाति। अनन्तरं तस्य विक्रयणात् प्राप्तेन धनेन राजवेषं भाटकरूपेण स्वीकरोति। एतेन एव क्रमेण अश्वम् अपि प्राप्नोति। अनन्तरं राजमार्गेण गाम्भीर्येण गच्छति।

जनाः एतं कञ्चित् राजकुमारं भावयन्तः आदरप्रदर्शनार्थं मार्गात् अपसृत्य पार्श्वे विनयेन तिष्ठन्ति।

रूपसिंहः प्रतिदिनम् अपि अन्धकारप्रसारपर्यन्तं नगरे मार्गेषु अटति। अनन्तरं राजवेषम् अश्वं च प्रत्यर्प्य गृहं गच्छति। एकां गोणीं प्रसार्य अपरया आत्मानम् आच्छाद्य निद्रां करोति।

यावत् सम्पाद्यते तत्र भूयान् भागः अश्व-राजवेषयोः निमित्तम् एव व्ययितं भवति। अतः बहुषु दिनेषु चणक-पृथुकादयः एव रूपसिंहस्य आहारः। कदाचित् जलं केवलं पीत्वा अपि स्वपिति सः। एवं स्थिते अपि राजवेषेण अटनं तु न परित्यजति। सौभाग्यात् तस्य आरोग्यम् उत्तमम् आसीत्। अतः सः दृढकायः।

कदाचित् रूपसिंहः अरण्ये काष्ठच्छेदनं कुर्वन् आसीत्। तदा तेन सुगन्धः आघ्रातः। एषः कुतूहलेन तस्यां दिशि गतवान्। तत्र

"बुन्देलखण्डदेशीया जानपदकथा"



श्रीगन्धवृक्षः दृष्टः। सः तं वृक्षं छित्वा श्रीगन्धकाष्ठखण्डान् कांश्चन सङ्गृहीतवान्। नगरे काष्ठं विक्रीय श्रीगन्धखण्डद्वयं स्वसमीपे संस्थाप्य यथापूर्वं राजवेषं धृत्वा अश्वम् आरुह्य वेगेन सगाम्भीर्यं राजमार्गेण गतवान्।

चतुष्पथे कश्चन विदेशीयः अभिमुखम् आगत्य– "नमस्काराः श्रीमन्" इति वदन् नमस्कृतवान्।

"कः भोः भवान्?" इति गाम्भीर्येण पृष्टवान् रूपसिंहः।

"प्रभो, अहं दूरदेशीयः कश्चन वणिक्। भवतः देशे वाणिज्यं समाप्य सिंहलदेशं गच्छन् अस्मि" इति विनयेन निवेदितवान् सः विदेशीयः।

रूपसिंहः क्षणकालम् आलोच्य कोषात् श्रीगन्धखण्डं निष्कास्य वणिजः हस्ते स्थापयन्– "ठाकुरवंशीयेन रूपसिंहराजेन दत्तम् उपायनम् एतत् इति उक्त्वा एतत् सिंहलराजाय ददातु। तेन भवतः कार्यं विनायासं सेत्स्यति" इति उक्त्वा अश्वं चोदयन् वेगेन ततः निर्गतवान्।

सः विदेशीयः वणिक् सिंहलदेशं गत्वा रूपसिंहेन दत्तं श्रीगन्धखण्डं सिंहलराजाय अर्पितवान्।

सिंहलराजेन इतः पूर्वं कदापि श्रीगन्धखण्डः न दृष्टः आसीत्। अतः सः रूपसिंहस्य उपायनेन नितरां सन्तुष्टः। तस्य वणिजः निमित्तं विशेषव्यवस्थां कृतवान् सः। तावदेव न, वणिग्द्वारा रूपसिंहाय रत्नखचिते पादुके उपायनरूपेण प्रेषितवान् अपि।

सः वणिक् बुन्देलखण्डं प्रत्यागत्य चतुष्पथे रूपसिंहस्य प्रतीक्षां कुर्वन् स्थितवान्। रूपसिंहः अश्वम् आरुह्य तत्र आगतः।

"नमस्कारः महाप्रभो" इति वदन् नमस्कृतवान् वणिक्।

अश्वं स्थगयित्वा पृष्टवान् रूपसिंहः– "कः भवान्?" इति।

"अहं विदेशीयः वणिक्। पूर्वं कदाचित् भवतः दर्शनं प्राप्तम् आसीत् मया। तदा भवता दत्तम् उपायनं सिंहलराजाय दत्तवान्

अहम्। एतेन विशेषसाहाय्यं प्राप्तं मया। सिंहलराजः रत्नखचिते पादुके भवते उपायनीकृतवान् अस्ति" इति उक्त्वा पादुके अर्पितवान् वणिक्।

"पुनः कं देशं गमिष्यति भवान्?" इति पृष्टवान् रूपसिंहः।

"अरेबियादेशं गन्तुम् इच्छामि" इति उक्तवान् वणिक्।

"एवं तर्हि एते पादुके अरेबियाराजाय दत्त्वा 'रूपसिंहराजेन उपायनीकृतम् एतत्' इति वदतु। भवतः वाणिज्ये साहाय्यं भविष्यति" इति उक्त्वा ततः निर्गतवान् रूपसिंहः।



वणिजा तथैव कृतम्। 'रत्नखचिते पादुके प्रेषितवान् रूपसिंहराजः न सामान्यः' इति तर्कितवान् अरेबियाराजः। अरेबियादेशे उत्तमाः अश्वाः प्राप्यन्ते। अरेबियाराजः शतम् अश्वान् वणिग्द्वारा रूपसिंहाय प्रेषितवान्।

रूपसिंहस्य नाम्नः बलात् अत्रापि अधिकः लाभः प्राप्तः आसीत् वणिजा। अतः सः वणिक् एतत् दौत्यं सन्तोषेण निरूढवान्।

अरेबियाचक्रवर्तिना सन्देशः अपि प्रेषितः आसीत्– "रूपसिंहमहाराजाय नमस्काराः। भवतः उपायनतः वयं सन्तुष्टाः। शतम् अश्वाः उपायनरूपेण प्रेष्यन्ते। कृपया स्वीकरणीयम् एतत्" इति।

वणिक् शतेन अश्वैः सह आगत्य बुन्देलखण्डे पूर्वतने एव चतुष्पथे स्थितवान्। रूपसिंहः तत्र आगतः।

वणिजं, तेन सह स्थितम् अश्वसमूहं च दृष्ट्वा गाम्भीर्येण पृष्टवान् रूपसिंहः– "किम् एतत्?" इति।

तदा वणिक्– "महाप्रभो, अरेबिया-चक्रवर्ती भवदीयम् उपायनं ससन्तोषं स्वीकृत्य एतान् अश्वान्, सन्देशं च प्रेषितवान्" इति उक्त्वा सन्देशं निवेदितवान्।

"अग्रे कुत्र गमनं भवतः?" इति पृष्टवान् रूपसिंहः।

"पुनरपि सिंहलदेशं प्रति गच्छन् अस्मि" इति उक्तवान् वणिक्।

''तर्हि एतान् अश्वान् रूपसिंहराजेन दत्ताः इति उक्त्वा सिंहलराजाय उपायनरूपेण अर्पयतु'' इति उक्त्वा अश्वं प्रेरयन् ततः निर्गतवान् रूपसिंहः।

''रूपसिंहमहाराजस्य उपायनम् एतत्'' इति उक्त्वा वणिक् यदा शतम् अश्वान् समर्पितवान् तदा सिंहलराजः आश्चर्यचकितः।

'एतादृशम् अपूर्वम् उपायनं प्रेषयतः रूपसिंहराजस्य मैत्री अवश्यं दृढीकरणीया' इति चिन्तितवान् सः। वणिग्द्वारा तेन ज्ञातं यत् रूपसिंहः दृढकायः सुन्दरः तरुणः इति। अतः सः स्वपुत्रीं तस्मै दातुम् इच्छन् अमूल्यानि वस्त्राणि, आभरणानि, परिवारं च वणिजा सह प्रेषितवान्।

बुन्देलखण्डम् आगतः वणिक् रूपसिंहस्य वासस्थलम् अजानन् चतुष्पथे प्रतीक्षमाणः स्थितवान्। सायङ्काले यथापूर्वं रूपसिंहः अश्वम् आरुह्य आगतवान्।

वणिजं दृष्ट्वा सः गमनं स्थगितवान्। वणिक् सिंहलराजस्य सन्देशं श्रावयित्वा– ''एषः परिवारः तेन प्रेषितः'' इति वदन् मङ्गलवस्त्राणि आभरणानि च रूपसिंहाय अर्पितवान्।

रूपसिंहः वस्त्राणि आभरणानि च स्वीकृत्य– ''श्वः अत्रैव मेलिष्यामि'' इति उक्त्वा ततः निर्गतवान्।

भाटकार्थम् आनीतानि वस्त्राणि प्रत्यर्प्य सिंहलराजेन प्रेषितानि वस्त्राणि आभरणानि च धृतवान् रूपसिंहः। स्वसमीपे स्थितानि सर्वाणि श्रीगन्धकाष्ठानि विक्रीय शिबिकां भाटकार्थं स्वीकृत्य शिबिकावाहकान् अपि निश्चितवान्। सायं शिबिकायाम् उपविश्य चतुष्पथसमीपम् आगतवान्। सिंहलराज-परिवारः वणिक् च चतुष्पथे आसीत्। अनन्तरं सर्वे सम्भूय सिंहलदेशं गतवन्तः।

अनन्तरं सिंहलराजकुमारी-रूपसिंहयोः विवाहः सवैभवं प्रवृत्तः। राज्ञः पुंसन्तानस्य अभावात् कालान्तरे रूपसिंहः एव सिंहासनाधिकारी जातः।





# वीरः हनूमान्

कण्ठे गजपुष्पलतां धृतवान् सुग्रीवः श्रीरामस्य वचने दृढं विश्वस्य पुनरपि किष्किन्धाम् उद्दिश्य प्रस्थितवान्। रामेण धृताः धनुर्बाणादयः तस्य उत्साहं वर्धयन्ति स्म। सुग्रीवं लक्ष्मणः, हनूमान्, नलः, नीलः, तारः इत्यादयः, अन्ये केचन वानरवीराः च अनुसृतवन्तः आसन्। तेषां सर्वेषां पृष्ठतः रामः आगच्छन् आसीत्।

मार्गे सान्द्रैः वृक्षैः युक्तं किञ्चन अरण्यं दृष्टम्। तत्र बहवः वृक्षाः दग्धप्रायाः आसन्। मृगपक्षिणां सञ्चारः तत्र न दृश्यते स्म। एतत् दृष्ट्वा रामः सुग्रीवं पृष्टवान्– "किमर्थम् एवम्?" इति।

तदा सुग्रीवः उक्तवान्– "पूर्वम् अत्र कश्चन आश्रमः आसीत्। आश्रमं परितः फलयुक्ताः वृक्षाः, पुष्पयुक्ताः लताः च आसन्। आश्रमे स्थिताः सप्तजननाम्ना ख्याताः ऋषयः तपःप्रभावेण सशरीरं स्वर्गं गताः। एतं प्रदेशं यः प्रविशति सः न प्रत्यागच्छति। अतः इदानीम् अत्र कोऽपि अन्तः न गच्छति। पशुपक्षिणः अपि अतः एव अत्र न सञ्चरन्ति। एतस्मात् अरण्यात् तदा तदा अप्सरःस्त्रीणां नाट्यध्वनिः गानं च श्रूयते। विविधाः सुगन्धाः अपि अरण्यात् निर्गच्छन्ति। एतस्मिन् अरण्ये त्रेताग्निः सदा ज्वलति। अतः एव अत्र सर्वे वृक्षाः दग्धाः इव दृश्यन्ते।

रामः लक्ष्मणः च सप्तजनानां तपःशक्तिं स्मरन्तौ क्षणकालं तत्रैव स्थित्वा तान् मनसा नमस्कृत्य अग्रे गतवन्तौ। किष्किन्धां प्राप्य

५. वालिवधः।

इतरैः सह वृक्षाणां मध्ये निलीय स्थितवन्तौ च।

सुग्रीवः इतोऽपि अग्रे गत्वा उच्चैः शब्दं कुर्वन् वालिनं युद्धार्थम् आहूतवान्। वालिनम् आहूय सः रामम् उक्तवान्- "मित्र! एतस्मिन् सन्दर्भे दीर्घकालं यावत् युद्धं कर्तुं मम सामर्थ्यं नास्ति। अतः 'अग्रजं शीघ्रम् अभिजानन् भवान् अविलम्बेन बाणप्रयोगं करोतु कृपया" इति।

"इदानीं भवतः अभिज्ञानं सुलभम्। अतः वालिनः अभिज्ञाने अपि न क्लेशः। एकेनैव बाणप्रहारेण अहं वालिनः संहारं करिष्यामि। मम सामर्थ्यं तु भवता प्रत्यक्षं दृष्टम् एव। अतः भीतिः सन्देहः वा मास्तु भवतः। सत्यवचनपरिपालकेन मया कदापि असत्यं न उक्तं, न उच्यते वा। अतः मयि विश्वस्य भवान् निश्शङ्कम् अग्रे गन्तुम् अर्हति" इति उक्तवान् रामः।

एतेन वचनेन सन्तुष्टः सुग्रीवः पुनरपि महता शब्देन वालिनं युद्धार्थम् आहूतवान्। पुनः पुनः वीरगर्जनं कृतवान् च।

अन्तःपुरे स्थितः वाली सुग्रीवस्य एतत् गर्जनं श्रुतवान्। 'मम दर्शनमात्रात् अपि भीतिं प्राप्नुवतः सुग्रीवस्य एतावत् धैर्यं कथम्? मरणे सन्निहिते कदाचित् विपरीता बुद्धिः उत्पद्यते इति प्राचीनाः वदन्ति। सुग्रीवस्य अपि तादृशी एव स्थितिः स्यात्' इति आलोचितवान् वाली तत्क्षणे एव युद्धार्थं प्रस्थितवान्।

एवं त्वरया गच्छन्तं वालिनं स्थगयित्वा



उक्तवती तारा– "आर्य! सुग्रीवेण सह युद्धार्थं किं रात्रौ एव गन्तव्यम्? सूर्योदयस्य अनन्तरं गतं चेत् अलं खलु? यः घोरं प्रहारं प्राप्य पलायितवान् सः अल्पेन एव कालेन युद्धार्थम् आगच्छति इत्यस्य कः अर्थः? कस्यापि परमसमर्थस्य साहाय्यम् अस्ति इत्येव खलु? अतः विचिन्त्य पदं स्थापयतु इति वदन्ती अस्मि अहम्। 'यस्य कस्यापि वा साहाय्यं सुग्रीवस्य भवतु, तम् अहं जेष्यामि एव' इति सामर्थ्यमदः मास्तु भवतः। सुग्रीवः तीक्ष्णमतिः। सम्यक् विचिन्त्य एव सः युद्धार्थम् आगतः अस्ति इति मम अभिप्रायः। भवदपेक्षया अपि अधिकसामर्थ्यवतः स्नेहं प्राप्य एव सः कार्यप्रवृत्तः अस्ति। अरण्यं गतेन अङ्गदेन एका विशिष्टा वार्ता आनीता। दशरथपुत्रौ रामलक्ष्मणौ ऋष्यमूकपर्वतम् आगतवन्तौ इति श्रूयते। महाबलशालिनोः तयोः सख्यं प्राप्तम् अस्ति सुग्रीवेण। रामः तु विराध-खर-दूषणादीन् मारितवान् इति श्रुतम्। अतः तस्य पराक्रमः अद्वितीयः एव स्यात्" इति।

वाली मौनं सर्वं शृण्वन् अस्ति। तदा तारा पुनः उक्तवती– "रामस्य विरोधः न श्रेयस्करः। अतः सुग्रीवस्य पुरतः मैत्रीप्रस्तावं करोतु। तं पुनरपि युवराजं करोतु। सः न परकीयः खलु? सः भवतः सहोदरः। पूर्वापरम् आलोच्य भाविहितं विचिन्त्य अहं वदन्ती अस्मि। सावधानं श्रवणेन भवान् अपि मम आशयं ज्ञातुं शक्नोति" इति।

किन्तु युद्धार्थं सन्नद्धाय वालिने तारायाः





जयप्रदान् मन्त्रान् पठित्वा सखीभिः सह तम् अनुसृतवती।

अनन्तरं वाली युद्धार्थं सन्नद्धं सुग्रीवं दृष्टवान्। सुग्रीवस्य दर्शनमात्रेण तस्य कोपः चतुर्गुणितं प्रवृद्धः। सः कटिं बद्ध्वा मुष्टिं प्रदर्शयन् अग्रे आगतवान्।

सुग्रीवः अपि मुष्टिम् उन्नीय कानिचन पदानि अग्रे स्थापितवान्। एतेन पर्वतः पर्वतेन घट्टितः इव अभवत्।

वालि-सुग्रीवयोः घोरं युद्धम् आरब्धम्। सुग्रीवः सालवृक्षम् उन्मूल्य तेन वालिनं प्रहृतवान्। एतेन क्रुद्धः वाली प्रतिप्रहारं दत्तवान्। किञ्चित्कालम् उभयोः समप्राबल्यं दृश्यते स्म। अनन्तरकाले सुग्रीवस्य बलं क्षीणं जातम्। सुग्रीवः रामस्य बाणप्रयोगं प्रतीक्षमाणः कष्टेन दीर्घं निःश्वसिति।

रामः अपि योग्यं समयं प्रतीक्षमाणः आसीत्। सुग्रीवस्य बलं क्षीणं जातम् अस्ति इति ज्ञातं तेन। इतः परम् अपि यदि विलम्बः क्रियेत तर्हि अनर्थः स्यात् इति आलोच्य रामः बाणं धनुषि संयोज्य वालिनं लक्ष्यीकृत्य प्रयुक्तवान्। स च बाणः शब्दं कुर्वन् वेगेन गतः, वालिनः हृदये लग्नः च। बाणप्रहारात्, छिन्नः वृक्षः इव वाली आक्रन्दनं कुर्वन् अधः पतितवान्।

इन्द्रेण दत्ता काञ्चनमाला कण्ठे आसीत् इत्यतः वालिनः प्राणाः झटिति न निर्गताः। सः

एतानि वचनानि सर्वथा न अरोचन्त। सः ताराम् एवम् उक्तवान्– "तत्र सुग्रीवे युद्धार्थं माम् आह्वयति सति, अहं मौनं तिष्ठेयम् इति अभिलषति वा भवती? भीरुः भवती। वीरस्य युद्धात् प्रतिनिवर्तनं नाम मरणात् अपि अतिरिच्यते। अतः मया युद्धार्थं गन्तव्यम् एव। धर्मभीरुः रामः निरपराधिनं मां मारयितुं प्रयत्नं न कुर्यात् एव। अतः अस्थाने भीतिः मास्तु भवत्याः। यदि युद्धदर्शने भवत्याः भीतिः तर्हि भवती अत्रैव तिष्ठतु। अहं सुग्रीवं न मारयामि, अपि तु तस्य मदम् अपनयामि। इतः परं सः दुष्टः सुग्रीवः जन्मनि कदापि मया सह युद्धं यथा न चिन्तयेत् तथा करिष्यामि" इति।

अनन्योपाया तारा वालिनं प्रदक्षिणीकृत्य



हस्तौ पादौ च इतस्ततः वेगेन चालयति। दृष्टिं परितः प्रसारयन् बाणप्रयोक्तारम् अन्विष्यति। तावता लक्ष्मणसमेतः रामः तत्र आगतः।

रामं दृष्ट्वा वाली एवम् उक्तवान्– "राम! दशरथमहाराजस्य पुत्रः सन्, सद्गुणसम्पन्नः इति कीर्त्या विलसन् भवान् एवं कर्तुम् अर्हति वा? अहं यदा अन्येन सह युद्धं कुर्वन् आसं, तदा भवान् मां बाणेन प्रहृतवान्। एवं कुर्वता भवता किं साधितम्? भवान् मां मारयितुं प्रयतमानः अस्ति इत्येव न ज्ञातं मया। राज्ञि चित्तशुद्धिः, इन्द्रियनिग्रहः, सहना, सत्यवादिता, धर्मपरता, पराक्रमः, न्यायप्रियता, सदाचारः च भवेयुः इति प्राज्ञाः वदन्ति। भवति अपि एते गुणाः स्युः इति विश्वस्य तारया निषिध्यमानः अपि अहं युद्धार्थम् आगतः। भवान् एवं दुष्टबुद्धिमान्, पापाचाररतः, लोकवञ्चकः च स्यात् इति सर्वथा न तर्कितम् आसीत्। मया भवद्विषये भवद्देशविषये वा किमपि अपराद्धं वा? भवतः अपमाननं कृतं वा? भवन्तं युद्धार्थम् आहूतवान् आसं वा? न खलु? तथापि मां बाणेन प्रहृतवान् भवान्। तत्रापि निलीय स्थित्वा! किं वीरोचितं कृत्यं वा एतत्? भावी राजा भवान् एव एवम् अधर्मम् आचरति चेत् लोके धर्मः कथं वा तिष्ठेत्? कुटिलः पापी च भवान् कथं वा इक्ष्वाकुकुले जातः? केनचित् 'एवं किमर्थं कृतम्?' इति पृष्टः भवान् आत्मानं कथं वा समर्थयिष्यति? यदि पराक्रमः प्रदर्शनीयः इति विचारः स्यात् तर्हि मम सम्मुखम् आगन्तव्यम् आसीत्। यदि भवता तथा कृतं स्यात् तर्हि एतावता यमपुरी दृष्टा स्यात्। सीताम् अन्वेष्टुम् एषः सर्वोऽपि प्रयत्नः इति अस्ति चेत् अहं वक्तव्यः आसं भवता। क्षणमात्रेण सीतां भवतः पुरतः आनीय स्थापयेयम्। केनापि उपायेन किष्किन्धासिंहासनम् आरोढव्यम् इति चिन्तयता मदनुजेन सुग्रीवेण मम मारणं यत् चिन्तितं तत् तर्कसहं स्यात्। किन्तु भवता निलीय अहं प्रहृतः यत् तत् तु सर्वथा असमर्थनीयम् अन्याय्यं च" इति।

एवम् उक्त्वा क्रमशः मूर्च्छावस्थोन्मुखं वालिनम् उक्तवान् रामः– "वालिन्!



धर्मसूक्ष्मम् अजानन् भवान् माम् एवं निन्दन् अस्ति। समग्रं भूमण्डलम् इक्ष्वाकूणां राज्यम्। तस्य राजा भरतः। भरतस्य आदेशस्य अनुसारम् अहं धर्मं रक्षन् अरण्ये सञ्चरन् अस्मि। भवान् धर्ममार्गात् च्युतः। निरपराधी अनुजः भवता राज्यात् निष्कासितः। तस्य पत्नी स्वाधीनीकृता। अतः एव एतादृशं दण्डनं प्राप्तं भवता। लक्ष्मणः यथा मम प्रियतरः तथा शरणं गतः सुग्रीवः अपि। स्नेहार्थम् अपि मया एतत् कार्यं कृतम्। भवन्तं मारयता मया कोऽपि अधर्मः न कृतः। भवान् कश्चन शाखामृगः। येन क्रमेण राजभिः वन्यमृगाः मार्यन्ते तेनैव क्रमेण मया भवान् मारितः। राज्ञाम् एषः व्यवहारः धर्मविरुद्धः कदापि न। अतः मया अनुचितं किमपि न कृतम्'' इति।

प्राणत्यागात् पूर्वं वाली रामं पुनः उक्तवान्– ''मरणप्राप्तिविषये मम चिन्ता नास्ति। तारायाः विषये, राज्यस्य, बान्धवानां विषये वाऽपि चिन्ता नास्ति। मम महती चिन्ता – अङ्गदविषये एव। मम प्रीतिपात्रं सः। मम वियोगात् सः नितरां दुःखितः भविष्यति। सः भवता एव रक्षणीयः। सुग्रीवाभिन्नतया भवता द्रष्टव्यः सः। मद्विषयकेन कोपेन सुग्रीवः तारां यथा न पीडयेत् तथा व्यवस्था अपि करणीया भवता। राम, भवति विश्वस्य अहं परलोकं गच्छन् अस्मि। सुग्रीवादयः सर्वे वानरप्रमुखाः न्याय्येन मार्गेण यथा गच्छेयुः तथा द्रष्टव्यं भवता'' इति।

''भवतः वचनम् अक्षरशः पालयिष्यामि'' इति अङ्गीकारं प्रदर्शितवान् रामः। वाली विसंज्ञः जातः।

एतावता, वालिना प्राप्ता दुर्गतिः तारया ज्ञाता। सा अश्रुधारां वाहयन्ती पुत्रेण सह किष्किन्धातः बहिः आगतवती।

मार्गे केचन वानरवीराः अभिमुखम् आगत्य ताम् उक्तवन्तः– ''भवती प्रतिगच्छतु। अङ्गदस्य रक्षणविषये चिन्तयतु। रामरूपेण आगतः मृत्युः वालिनः प्राणान् नयन् अस्ति। नगरस्य सर्वाणि द्वाराणि पिधाय अविलम्बेन अङ्गदं पट्टाभिषिक्तं

करोतु। अन्यथा किष्किन्धायां भवत्याः आश्रयः न भवेत्। शत्रुवानराः आगत्य सर्वं वशीकुर्युः। ततः पूर्वं प्रतिबन्धकोपायः चिन्तनीयः भवत्या" इति।

एतत् श्रुत्वा तारा– "मम पतिः एव परलोकं गतः। एवं स्थिते किं राज्येन, किं पुत्रेण, किम् एतेन शरीरेण? येन मार्गेण वाली गतः तम् एव मार्गम् अहम् अपि अनुसरिष्यामि" इति उक्त्वा विकीर्णकेशा सा उरस्ताडनपूर्वकं रोदनं कुर्वती वालिसमीपं गतवती।

भूमौ पतितं बाणेन विद्धं वालिनं, पार्श्वे स्थितौ रामलक्ष्णौ च क्षणकालं दृष्टवती सा। अनन्तरं पतितं वालिनम् आलिङ्ग्य उच्चैः आक्रन्दनं कृतवती।

तारायाः अङ्गदस्य च दुःखं दृष्टवतः सुग्रीवस्य दुःखम् अपि उद्गतम्।

हनूमान् तारायाः समीपं गत्वा बहुविधानि सान्त्वनवचनानि उक्तवान्–

"तारादेवि, जातस्य मरणं ध्रुवम् इति भवती जानाति एव। अतः मृतस्य विषये एवं रोदनं न उचितम्। आशाकेन्द्रस्य पुत्रस्य अङ्गदस्य योगक्षेमविषये भवत्या इदानीं चिन्तनीयम्। तस्य जीवनस्य मार्गदर्शिका भवती एव। वाली महान् वीरः आसीत्। अतः तेन उत्तमाः लोकाः प्राप्यन्ते इत्यत्र नास्ति संशयः। इदानीं वालिनः उत्तरक्रियायाः व्यवस्था करणीया अस्ति। अङ्गदस्य पट्टाभिषेकः अपि त्वरया करणीयः। सिंहासनम् अधिककालं यावत् राजविहीनं न तिष्ठेत्। वयं सर्वे वानराः भवत्याः आज्ञायाः पालकाः। इदानीम् अस्माभिः किं करणीयम् इति आज्ञापनीयं भवत्या" इति।

हनूमतः वचनानि श्रुत्वा गद्गदस्वरेण उक्तवती तारा– "आञ्जनेय, भवता यानि कार्याणि उक्तानि तानि मया करणीयानि न, अपि तु सुग्रीवेण। अतः एतानि कार्याणि तं वदतु। वालिवियोगतः अहं जीवच्छवः अस्मि। वालिनः अनुसरणं मम कर्तव्यम्" इति।





# समस्यापरिहारः

वरदवरदेशस्य राजा यशोवर्मा। सदा प्रजाहितचिन्तने लीनः भवति सः। यदा सः चिन्तनं कुर्वन् भवति तदा सर्वाणि कार्याणि विस्मरति सः। विश्रान्तिभवनम् अपि न गच्छति सः। आन्तरङ्गिकैः स्मार्यते चेत् वदति सः– ''मनसि आगतस्य सन्देहस्य परिहारप्राप्तिपर्यन्तम् अहं कुत्रापि न गच्छामि। परिहारम् अप्राप्य अन्यत्र गमनं पलायनम् इव। प्रजाहितचिन्तनस्य विरुद्धम् एतत्'' इति। प्रजाहितचिन्तनविषयिण्याः राज्ञः श्रद्धयाः आसक्त्याः च गभीरताम् अवगन्तुम् अशक्नुवन्तः हितचिन्तकाः मौनं तिष्ठन्ति स्म।

कदाचित् वरदवरदेशे भीकरः क्षामः आगतः। त्रीणि वर्षाणि यावत् देशे वृष्टिः न आगता। प्रजानां कष्टानि दिने दिने वर्धन्ते। वरदवरदेशस्य एतादृशीं कष्टकरीं परिस्थितिं जानन् प्रतिवेशिराजः वीरसेनः वरदवरदेशस्य उपरि आक्रमणार्थं प्रस्थितवान्।

इदानीं सङ्कटग्रस्तः अस्ति वरदवरदेशः। एकत्र क्षामः बाधते। अपरत्र शत्रोः आक्रमणम्। गण्डस्य उपरि पिटकः संवृत्तः इव। 'इदानीं किं करणीयम्' इति मन्त्रिभिः सह समालोचनं कृतवान् राजा। दीर्घकालस्य चिन्तनस्य अनन्तरं मन्त्रिणः उक्तवन्तः– ''महाराज! क्षामकारणतः अस्माकं देशः कष्टे पतितः अस्ति। युद्धं सम्मुखीकर्तुम् अस्माकं सामर्थ्यं नास्ति। अतः इदानीं सन्धिप्रस्तावः एव उचितः भवेत्'' इति।

तदा राजा यशोवर्मा उक्तवान्– ''एषा तु सामान्या सूचना। सन्धिम् अहं कदापि न अङ्गीकरोमि। समस्या सदापि धैर्येण सम्मुखीकरणीया। समस्यायाम् उपस्थितायां,

''भामहः''



''युद्धं मम प्रियम् इति न। किन्तु समस्यातः विमुखताम् अहं न इच्छामि। अतः मार्गान्तरम् आलोच्य सूचयन्तु भवन्तः'' इति उक्तवान् राजा।

मन्त्रिणः दीर्घकालं यावत् पुनरपि समालोचनं कृतवन्तः। 'राज्ञः तर्पणं कष्टकरम् एव' इति तेषाम् अभिप्रायः। केचन तु 'वस्तुस्थितिं सम्यक् अवगन्तुम् अशक्तः राजा मूर्खः रूक्षः च' इति उक्तवन्तः।

दीर्घकालस्य अनन्तरं ते राजानं दृष्ट्वा— ''महाराज! समस्याविषये बहुधा चिन्तनं कृतम्। तथापि इतोऽपि चर्चनीयम् अस्ति। श्वः वयम् अस्माकम् एकाभिप्रायं निवेदयिष्यामः'' इति निवेद्य गृहं गतवन्तः।

राजा विषण्णवदनः सन् एकाकी तत्रैव उपविष्टवान् आसीत्। तावता आस्थानविदूषकः विशारदः तत्र आगत्य राजानं पृष्टवान्— ''महाराजः खिन्नः इव दृश्यते, किमर्थम्?'' इति।

विदूषकस्य विशारदस्य आगमनेन राजा सन्तुष्टः अभवत्। विशारदः वचनचतुरः तर्कनिपुणः च। राज्ञः मनः यदा खिन्नं भवति तदा एषः विशारदः चतुरैः, युक्तिपूर्णैः विविधवादैः वा राज्ञः मनः तोषयति। रात्रेः द्वितीयः यामः अतीतः चेदपि राज्ञा निद्रा न कृता इति जानन् विदूषकः राज्ञः समीपम् आगतवान् आसीत्।

''किं वदामि विशारद? महती समस्या

पलायनं कदापि न करणीयम्। मम एतं विचारं भवन्तः जानन्ति एव। युद्धे उपस्थिते, सन्धिः नाम समस्यातः विमुखगमनम् इव। अतः एव अहं सन्धिं न इच्छामि। 'सन्धिं करोतु' इत्येतस्यां सूचनायां भवतां बुद्धिमत्तायाः किं पात्रम् अस्ति? जयः भवतु, पराजयो वा, युद्धम् एव वरम् इति मम आशयः'' इति।

''प्रभो, क्षामतः समग्रः देशः त्रस्तः अस्ति। क्षामं युद्धं च सम्मुखीकर्तुम् अस्माकं सामर्थ्यं नास्ति। अतः सन्धिः सूचितः। एतेन तात्कालिकतया युद्धं निवारितं भवति। सामर्थ्यं प्राप्तं चेत् कालान्तरे वयं सन्धिं तृणीकृत्य युद्धं कर्तुम् अर्हामः'' इति उक्तवन्तः मन्त्रिणः।



उपस्थिता अस्ति। मन्त्रिणः अपि परिहारोपायं सूचयितुम् असमर्थाः सन्तः 'श्वः वदिष्यामः' इति उक्त्वा गताः। अतः एव एतावता अपि निद्रा न प्राप्ता मया" इति उक्तवान् राजा यशोवर्मा।

"युद्धस्य समस्या खलु बाधते भवन्तम्?" इति पृष्टवान् विशारदः।

राजा विषादपूर्वकं हसन्– "आम्! किन्तु राजनीतौ भवतः कः परिश्रमः? अतः स च विषयः इदानीं मास्तु। अन्यस्मिन् विषये वादः भवतु। अद्य मया बादरायणीयनामकः ग्रन्थः पठितः अस्ति। तत्र लिखितम् अस्ति यत्– कस्यापि ग्रन्थस्य विषयः अविचार्य न अङ्गीकरणीयः इति" इति उक्तवान्।

"युक्तम् एव उक्तं तत्र। तस्मिन् वचने न काऽपि विप्रतिपत्तिः" इति उक्तवान् विशारदः।

"किन्तु बादरायणीये उक्ते वचने मम विश्वासः सर्वथा नास्ति। एवं स्थिते वदतु– मया तस्य ग्रन्थस्य वचनं पाल्यमानम् अस्ति उत न?" इति पृष्टवान् राजा।

क्षणकालं यावत् मौनं स्थितवान् विदूषकः। किञ्चित् चिन्तनेन तेन ज्ञातं यत् बादरायणीयग्रन्थः कल्पितः, न तु वास्तविकः। वादार्थं राजा तादृशं ग्रन्थं परिकल्प्य ग्रन्थस्य वचने न विश्वसिमि इति वदन् स्वपक्षम् उपस्थापितवान् अस्ति इति।

"प्रभो, भवता स्वयम् उक्तं खलु– तस्मिन् वचने मम विश्वासः नास्ति इति। अतः यत्र विश्वासः नास्ति, तस्य पालनम् अपि न भवेत् एव" इति उक्तवान् विशारदः।

"विश्वासः न प्रदर्शितः चेत् अपि ग्रन्थस्य वचनस्य पालनं कृतम् इव भवति। यतः बादरायणीयम् इति कश्चन ग्रन्थः। तस्य ग्रन्थस्य वचने विश्वासः न क्रियते इति उच्यते। वचनस्य आशयः अपि एषः एव। अतः यत् न क्रियते इति उच्यते तत् कृतम् एव भवति" इति हसन् उक्तवान् राजा।

क्षणकालस्य मौनस्य अनन्तरं विशारदः पुनः उक्तवान्– "प्रभो, किं वादेन? भवान् सदा सत्यम् एव वदति इति अहं जानामि। भवता उक्तं – मया ग्रन्थस्य वचने न विश्वस्यते इति। अतः भवता ग्रन्थस्य वचनं



वैशिष्ट्यम् अस्ति' इति जानन् राजा किञ्चित् विचिन्त्य पुनः उक्तवान्– "विशारद! अहो बुद्धिमत्ता भवतः! मया यादृशी समस्या उपस्थापिता तादृशी एव समस्या भवता वार्तालापमध्ये उपस्थापिता। मद्विरुद्धम् आचरणीयम् इति मम आज्ञा यदि भवेत्, ताम् आज्ञां यदि भवान् न पालयेत् तर्हि तदपि मद्विरुद्धम् आचरणम् एव सञ्जातम्। अस्तु तावत्, एतादृशसमस्यायाः परिहारः कोऽपि नास्ति वा?" इति।

"कुतो न स्यात्? मद्भिन्नः यः कोऽपि वदति चेदपि मम आज्ञां मा धिक्करोतु इति तस्य तात्पर्यं सिद्ध्यति। तन्नाम भवता आत्मानं पृथक्कस्य समस्यायाः परिहारः चिन्तनीयः। बादरायणीयग्रन्थस्य वचनस्य आशयः अपि एवम् एव। 'बादरायणात् भिन्ने ग्रन्थे यत्किमपि लिखितं चेदपि अविचार्य तत्र विश्वासः न करणीयः' इति तस्य तात्पर्यम्। एवम् अङ्गीकृतं चेत् न काऽपि समस्या" इति उक्तवान् विदूषकः।

"किन्तु बादरायणीये 'मद्भिन्ने ग्रन्थे' इति न लिखितं खलु? अतः कथं वयं तथा अङ्गीकुर्याम?" इति पृष्टवान् राजा।

"कोऽपि ग्रन्थः स्वव्याघातकरं वचनं न वदति। अतः अस्माभिः एवं तात्पर्यं कल्प्यते" इति उक्तवान् विशारदः।

"एवं कल्पनं तु समस्यायाः परिहारः इति न उच्यते। समस्यातः पलायनम् एव एतत्"

न पाल्यते इति अहं चिन्तयामि" इति।

तदा राजा यशोवर्मा उक्तवान्– "विशारद! प्रशंसावचनैः समस्यां विस्मारयितुं न अर्हति भवान्। मया ग्रन्थस्य वचनं पाल्यमानम् अस्ति उत न इत्यत्र स्पष्टम् उत्तरम् आवश्यकम्। राजा सन् अहम् आज्ञां कुर्वन् अस्मि। मम आज्ञां धिक्कर्तुम् अर्हति वा भवान्?" इति।

विशारदः हसन् राजानम् उक्तवान्– "प्रभो, मद्विरुद्धम् आचरणीयम् इति भवता स्वयम् उक्तं चेत् अपि अहं भवद्विरुद्धम् आचरणं न करोमि। एवं स्थिते भवतः आज्ञायाः धिक्कारः कथं वा शक्यः? अहं समस्यायाः परिहारं चिन्तयन् अस्मि" इति।

'हसतः वदतः विशारदस्य वचने किमपि

इति उक्तवान् राजा यशोवर्मा।

तदा विशारदः पृष्टवान्– "समस्यायाः परिहारः नाम कः? समस्या निवृत्ता चेत् सा परिहृता इत्येव अर्थः खलु?" इति।

"उपस्थितायाः समस्यायाः निवारणं नाम तत् ततः पलायनम् एव, नान्यत्। प्रजानां समस्या यदा पुरतः भवति तदा विश्रान्तिगृहं प्रति गमनम् अपि अहं समस्यातः पलायनम् इत्येव भावयामि" इति उक्तवान् राजा।

"प्रभो, एकं विषयं चिन्तयतु भवान्। विश्रान्तिगृहे विश्रान्तिसुखस्य अनुभवेन मनसः शान्तिः प्राप्यते। तस्मिन् समये समस्यापरिहारार्थं नूतनः मार्गः स्फुरेत् अपि। अतः विश्रान्तिस्वीकारः नाम समस्यातः पलायनम् इति न भावनीयम्। समस्यायाः उपेक्षा तिरस्कारः वा न उचितः इति तु अहम् अङ्गीकरोमि" इति उक्तवान् विशारदः।

विशारदस्य वचनं स्वीकारयोग्यम् अस्ति इति ज्ञातवान् राजा। सः मन्दहासपूर्वकम् उक्तवान्– "विशारद, भवता युक्तम् एव उक्तम्। तत्क्षणे एव समस्यायाः परिहारार्थं कोऽपि मार्गः न दृश्यते चेत् चिन्तनार्थम् अल्पः कालः स्वीकृतः चेत् न दोषाय। समस्याविस्मरणं तु दोषाय। मम सिद्धान्ते स्थितं दोषं भवान् प्रदर्शयन् माम् उपकृतवान्। किन्तु मम अपरः प्रश्नः। एवं समस्यातः तात्कालिकपलायनं विना नान्याः गतिः वा?" इति।

"प्रभो, समस्यापरिहारस्य क्रमः एव एषः। अतः एतादृशं व्यवहारं पलायनं मा भावयतु। समस्या तत्क्षणे यथा न बाधेत तथा कृत्वा कालान्तरे परिहारस्य चिन्तनं योग्यः एव" इति उक्तवान् विशारदः।

"विशारद! भवता मम सामान्यां समस्यां परिहरता, अजानता अपि प्रधाना समस्या अपि परिहृता" इति वदन् अमूल्यं रत्नहारं विशारदाय दत्तवान् राजा।

अनन्तरदिने एव राजा मन्त्रिणः सूचितवान्– "सन्धिप्रस्तावः अनुमतः मया। अतः तदर्थं योग्यां व्यवस्थां कुर्वन्तु" इति।





# महाकाव्यम्

वराहपुरनामके ग्रामे पूर्वं मुरलीधरः नाम कश्चित् निवसति स्म। सः आत्मानं महाकविं भावयति स्म। कदाचित् सः द्वित्राणां मासानां प्रयत्नेन एकं काव्यं रचितवान्। आत्मना लिखितं काव्यं पञ्चषवारं पठित्वा सः निश्चितवान् यत् मया लिखितं काव्यम् उत्तमम् अस्ति इति।

तस्मिन् एव ग्रामे वाणीवल्लभः नाम महापण्डितः निवसति स्म। तेन अपठितानि संस्कृतकाव्यानि प्रायः न आसन्। मुरलीधरः चिन्तितवान् यत् वाणीवल्लभः मम काव्यस्य प्रशंसां यदि कुर्यात् तर्हि वरं स्यात् इति। अतः सः वाणीवल्लभसमीपं गत्वा निवेदितवान्– "श्रीमन्! मया एकं काव्यं लिखितम् अस्ति। तत् भवन्तं श्रावयितुम् इच्छामि। कृपया भवता श्रोतव्यम्" इति।

वाणीवल्लभः एतं प्रस्तावम् अङ्गीकृतवान्। मुरलीधरः काव्यं श्रावयितुम् आरब्धवान्।

किञ्चित्कालं श्रुत्वा वाणीवल्लभः उक्तवान्– "अद्य एतावता अलम्। यतः मम अवश्यकरणीयम् अन्यत् कार्यं किञ्चित् अस्ति" इति।

"एवं तर्हि श्वः प्रातः अहम् आगमिष्यामि" इति उक्त्वा मुरलीधरः ततः निर्गतवान्। अनन्तरदिने प्रातः सः वाणीवल्लभस्य गृहम् आगतवान्।

एतस्मिन् दिने अपि वाणीवल्लभः किञ्चित्कालं यावत् काव्यपठनं श्रुत्वा उक्तवान्- "अद्य एतावता अलम्" इति।

एवम् एव सप्ताहः अतीतः। काव्यम् आद्यन्तं श्रावणीयम् इति मुरलीधरस्य इच्छा। 'काव्यपठनम् एतेन एव वेगेन प्रचलति चेत् समग्रस्य श्रावणार्थं मासात्मकः

कालः अपि अपर्याप्तः भवेत्' इति आलोचितवान् सः।

अतः सः कदाचित् वाणीवल्लभं पृष्टवान्— "श्रीमन्! भवान् मन्निमित्तम् एकं पूर्णं दिनं रक्षितुं न शक्नुयात् वा?" इति।

"किमर्थम्? एवं रक्षणेन भवतः कः लाभः?" इति पृष्टवान् वाणीवल्लभः।

"तदा तु अहं मम काव्यश्रावणं शीघ्रं समापयितुं शक्नोमि" इति उक्तवान् मुरलीधरः।

"तदस्तु। कं लाभं मनसिकृत्य भवान् माम् एवं काव्यं श्रावयन् अस्ति इति प्रथमं वदतु" इति उक्तवान् वाणीवल्लभः।

"समग्रस्य काव्यस्य श्रवणात् भवान् ज्ञास्यति यत् मदीयं काव्यं महाकाव्यम् इति। अतः एव मम एषः प्रयत्नः" इति उक्तवान् मुरलीधरः।

"भवदीयं महाकाव्यं वा? भवतः कथनात् ऋते एतत् कथं ज्ञायेत मया? यदि भवान् एतत् पूर्वम् एव उक्तवान् स्यात् तर्हि एतावत् कष्टं वोढव्यं न अभविष्यत्" इति उक्तवान् वाणीवल्लभः।

"भवतः मुखात् 'एतत् महाकाव्यम्' इति वचनम् आगच्छेत् इति मम निरीक्षा" इति उक्तवान् मुरलीधरः।

"एवं वा? एतत् मया पूर्वम् एव ज्ञातं यदि स्यात् तर्हि आवयोः उभयोः अपि समयस्य श्रमस्य च व्ययः न अभविष्यत्। इदानीम् अहं वदामि— एतत् महाकाव्यम् इति। इतःपरं काव्यश्रावणं मास्तु" इति उक्तवान्



वाणीवल्लभः।

तदा मुरलीधरः उक्तवान्– "न केवलं भवान्, सर्वे पण्डिताः अपि एतत् महाकाव्यं वदेयुः" इति।

"मत्काव्यश्रवणकष्टं भवद्भ्यः न दास्यामि इति भवता उक्तं चेत् ते भवदीयं काव्यं महाकाव्यम् अवश्यं वदेयुः" इति उक्तवान् वाणीवल्लभः।

एतत् उत्तरं श्रुत्वा मुरलीधरः आश्चर्येण पृष्टवान्– "काव्यस्य श्रवणं विना महाकाव्यत्वं कथं वा ज्ञायेत?" इति।

"मित्र! एतस्य श्रवणं श्रमसाध्यम्। अतः महाकाव्यत्वाङ्गीकारेण काव्यश्रवणश्रमः न भविष्यति इति ज्ञातं चेत् सर्वे पण्डिताः भवदीयं काव्यं महाकाव्यं वदेयुः एव" इति उक्तवान् वाणीवल्लभः।

"श्रीमन्! सर्वे मदीयं काव्यं महाकाव्यं वदेयुः इति मम इच्छा। तदर्थम् अत्र किमपि परिवर्तनं करणीयं चेत् सूचयितुम् अर्हति भवान्" इति उक्तवान् मुरलीधरः।

"एवं चेत् काव्यस्य नाम एव 'महाकाव्यम्' इति निश्चिनोतु। तदा सर्वे विना श्रमम् एतत् महाकाव्यं वदन्ति एव" इति सूचितवान् वाणीवल्लभः।

'मदीयं काव्यम् एतस्मै सर्वथा न अरोचत' इति ज्ञातवान् मुरलीधरः। अतः सः वाणीवल्लभं पृष्टवान्– "श्रीमन्, मम काव्यं भवते न अरोचत इति अस्ति चेत् एतत् पूर्वम् एव किमर्थं न उक्तं भवता?" इति।

"प्रथमदिने एव मया यदा काव्यश्रवणं मध्ये निराकृतं, तदा एव भवता वस्तुस्थितिः ज्ञातव्या आसीत्। किन्तु भवान् न ज्ञातवान्। कमपि कविं निराशं कर्तुं, कस्यचित् अपि कृतिम् उपेक्षया द्रष्टुम् अहं न अर्हामि। अतः सहनमया सर्वं श्रुतम्" इति उक्तवान् वाणीवल्लभः।

एतत् श्रुत्वा स्वस्य काव्यस्य योग्यतां जानन्, स्वव्यावहारविषये लज्जाम् अनुभवन् मुरलीधरः मौनम् उत्थाय शिरः अवनमय्य ततः निर्गतवान्।






# कलहप्रिया राधा

रामकिशोरः नाम कश्चन कृषिकः पूर्वं कस्मिंश्चित् ग्रामे निवसति स्म। तस्य पत्न्याः नाम राधा इति। राधा कलहप्रिया।

कदाचित् बन्धुगृहस्य विवाहं समाप्य रामकिशोरः राधा च स्वग्रामं प्रत्यागच्छन्तौ आस्ताम्। यदा तौ ग्रामसमीपम् आगतौ तदा अन्धकारः मन्दं प्रसरन् आसीत्। ग्रामसीमायां ताभ्यां कश्चन आम्रवृक्षः दृष्टः। आम्रवृक्षे कानिचन फलानि पक्वानि आसन्, पुनः कानिचन अपक्वानि।

"पश्यतु, आम्रवृक्षे कति पक्वानि फलानि दृश्यन्ते इति! वृक्षम् आरुह्य कानिचन फलानि आनयतु भोः। एतस्मिन् वर्षे मया आम्रफलानि न खादितानि एव" इति पतिम् उक्तवती राधा।

"अन्धकारः प्रसरन् अस्ति। त्वरया गत्वा गृहं प्राप्नुयाम तावत्। श्वः रुचिकराणि बहूनि आम्रफलानि आनीय दास्यामि भवत्यै" इति उक्तवान् रामकिशोरः।

"इदानीम् एव आवश्यकानि मम। इदानीम् आनीय दातुम् अशक्तः भवान् श्वः आनयेत् इत्यत्र कः विश्वासः?" इति पतिम् उक्तवती राधा।

असहायः रामकिशोरः वृक्षस्य समीपं गतवान्। तावता वृक्षात् कश्चित् अधः कूर्दितवान्। सः रामकिशोरस्य उपरि पतितः। एतेन रामकिशोरः अपि अधः पतितः। तस्य पादे तीव्रः व्रणः जातः। सः वेदनया क्रन्दनम् आरब्धवान्।

"अये मूर्ख, सर्वथा अन्धः वा भवान्? पशुः इव मम पत्युः उपरि पतितवान् खलु? किं मम पतिं मारयितुम् इच्छति वा भवान्?" इति क्रोधेन पृष्टवती राधा।

सः अपरिचितः मन्दम् उत्थाय रामकिशोरम् अपि उत्थापितवान्। अनन्तरं राधाम् उक्तवान् सः– "मातः! स्खलनात्

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

अहम् अधः पतितः। क्षन्तव्यः अहम्" इति।

कलहप्रिया राधा उच्चस्वरेण उक्तवती– "अये, भवतः असत्यवचने विश्वसितुम् अहं न मूर्खा। सर्वं ग्रामप्रमुखस्य पुरतः निवेदयतु। योग्यं दण्डनं प्राप्नोतु च" इति।

रामकिशोरस्य उपरि पतितस्य पुरुषस्य नाम गोपालः इति। ग्रामं गता राधा ग्रामप्रमुखं दृष्ट्वा गोपालस्य उपरि अपराधम् आरोपितवती।

ग्रामप्रमुखः गोपालम् आहूतवान्। एतद्विषये तस्य कथनम् अपि श्रुतवान्। एतस्मात् सः ज्ञातवान् यत् गोपालेन बुद्ध्या न कृतम्, अपि तु अकस्मात् प्रवृत्तम् इति। अतः सः राधां सूचितवान् यत् एतम् एतस्मिन् सन्दर्भे क्षाम्यतु इति।

तदा राधा कोपेन उक्तवती– "एषः वृक्षस्य शाखायां निलीय स्थितवान् आसीत्। मम पतिम् आगतं दृष्ट्वा बुद्ध्या तस्य उपरि पतितः एषः। भवान् वदति यत् एषः मया क्षन्तव्यः इति। अहो, न्यायनिर्णयक्रमः भवतः! भवान् न्यायनिर्णयं कर्तुं न शक्नोति चेत् वदतु। अहम् अन्यत्र गत्वा न्यायं प्राप्स्यामि" इति।

राधा कलहप्रिया अविवेकिनी इति ज्ञातं ग्रामप्रमुखेण। अतः सः राधाम् उक्तवान्– "भवती योग्यं न्यायम् इच्छति खलु? तर्हि भवती वृक्षम् आरुह्य तिष्ठतु। गोपालः वृक्षस्य अधः आगमिष्यति। तदा भवती तस्य उपरि पततु। तदा प्रतीकारः सेत्स्यति" इति।

"वृक्षात् मया पतनीयम्? यदि अहं गोपालस्य उपरि न पतेयं तर्हि मम मरणं स्यात्" इति उक्तवती राधा।

"गोपालस्य अपि एतादृशी एव स्थितिः आसीत् खलु? तथापि भवती तस्य वचने न विश्वसितवती। कोऽपि बुद्ध्या वृक्षात् न पतति इति इदानीं वा ज्ञातं वा भवत्या?" इति पृष्टवान् ग्रामप्रमुखः।

एतत् श्रुत्वा स्वव्यवहारविषये लज्जाम् अनुभवन्ती राधा शिरः अवनमय्य ततः निर्गतवती।



## अतिदूरगामिनः पक्षिणः



उत्तरयुरोपप्रदेशे ग्रीन्ल्याण्ड्प्रदेशे च दृश्यमानाः 'आर्कटिक् टेर्न्' नामकाः समुद्रपक्षिणः १२,००० मैल् दूरम् अपि अतिक्रम्य प्रपञ्चस्य अपरं पारम् इति कथ्यमानम् अण्टार्कटिकाप्रदेशं प्राप्नुवन्ति। वर्षानन्तरं ते प्रत्यागमिष्यन्ति च।




नायागाराजलप्रपाताः प्रतिवर्षं ३ द्वादशाङ्गुलं यावत् पृष्ठतः अपसरन्तः सन्ति। १०,००० वर्षेभ्यः पूर्वम् एते यत्र आसन् ततः ७ मैल् (११ कि.मी.) दूरे इदानीं दृश्यन्ते। आगामिषु २५,००० वर्षेषु एते जलप्रपाताः कासरमये प्रदेशे अदृश्यतां गच्छेयुः इति सम्भाव्यते।

## विशालकायः मत्स्यः



प्लैङ्कटन्नामकः मत्स्यः एव अतिविशालकायः। किन्तु एषः न अपायकारी। एषः शार्कमीनान् हेवल्मीनान् च खादन् ५९ द्वादशाङ्गुलं यावत् वर्धते। एतस्य भारः ४२.४ टन्मितः भवेत्।

# नाटकं द्रष्टुं गच्छाम

| | | |
|---|---|---|
| I – | इदानीं रात्रिसमये कुत्रापि गमनार्थं सन्नाहं कुर्वन् अस्ति इति भाति। | Looks like you are planning to go somewhere at this hour of the night? |
| II – | आं, नाटकं द्रष्टुं नगरं गच्छन् अस्मि। | Yes, going to a theatre. |
| I – | अन्यः कोऽपि आगच्छति वा भवता सह? | Anyone else going with you? |
| II – | नैव, एकाकी गच्छन् अस्मि। | No, I am going alone. |
| I – | कथं गमनं भवतः? | How do you go? |
| II – | स्कूटरयानेन। किं भवान् अपि आगन्तुम् इच्छति? | I have my scooter! Why, you also wish to come? |
| I – | न आगन्तव्यम् इति न। किन्तु .... | Not that I do not wish but...... |
| II – | तर्हि गच्छाम भोः। एकाकितया गमने ममापि नीरसता एव। | Let us go, I say. I too will not have to feel lonely. |
| I – | मया गृहे न उक्तम् ....। | People in my house wouldn't know. |
| II – | तत्र किं, स्कूटरयानेन भवतः गृहं गत्वा उक्त्वा ततः एव गच्छाम तावत्। | What is there. We can inform them on our way. |
| I | श्वः कार्यालयगमनम् अस्ति। | Our office is working tomorrow. |
| II | तत् ममापि अस्ति एव भोः। प्रायः त्रिवादने प्रत्यागन्तुं शक्नुयाम। निद्रा पूर्णतः नश्यति इति न। | Don't worry. My office is also working. We can come back by 3 o'clock I suppose. We will not lose sleep altogether. |
| I | पिता अनुमन्यते वा न वेति ....। | I don't know if my father would agree. |
| II | अनुमतिम् अहं प्राप्नोमि। मम वचनं तिरस्कर्तुं न अर्हति भवतः पिता। यतः निस्सत्त्वं नाटकादिकं द्रष्टुम् अहं न गच्छामि इति जानाति सः। | I will see that he does. I don't think your father will reject my request. He knows that I will not waste my time on worth less plays. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां फेब्रवरी-९१ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा डिसेम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'अक्टोबर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **लोहपाशेन बन्धनं दुःखदायकम्।**

द्वितीयचित्रम् - **बाहुपाशेन बन्धनं सुखदायकम्।**

प्रेषकः - श्री सि.पि. स्वामिनाथः, ७५, नाडार्वीथी, कोयम्बत्तूरु-६४१००१

---




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अङ्गुलिः - | Finger | प्रसह्य - | Suddenly |
| अनुभविता - | One who experiences | बिभ्यति - | Afraid |
| अपनयति - | Removes | भर्त्सनम् - | Abusing |
| अवितर्किता - | Unexpected | रूक्षः - | Rude |
| अश्रुतपूर्वम् - | Unheard of | लशुनः - | Garlic |
| इन्धनतैलम् - | Petrol | वटवृक्षः - | Banian Tree |
| उपायनधनम् - | Tribute-money | वस्तुस्थितिः - | Fact |
| कूर्दितवान् - | Jumped | विकलाङ्गः - | Handicapped |
| क्षाम्यति - | Forgives | विप्रतिपत्तिः - | Objection |
| खञ्जः - | Lame | विमुखता - | Disinterest |
| चटकः - | Sparrow | विसंज्ञः - | Unconscious |
| चणकः - | Bengal gram | वेदना - | Pain |
| तर्कसहम् - | Logical | वैयक्तिकरूपेण - | Personally |
| धिक्कृतवान् - | Flouted | व्याघातः - | Blow |
| नयनम् - | Carrying | शशः - | Rabbit |
| पञ्चषवारम् - | Five or six times | शून्यप्रायः - | Appearing to be vacant |
| पक्वम् - | Ripe | | |
| प्रतिपदम् - | In every step | सामन्तः - | Vassal king |
| प्रतिबन्धकोपायः - | Preventive measure | स्फोटकम् - | Cracker |
| प्रतिरोधः - | Obstruction | * * * * | * * * * |

* * * *

# MORE THAN A MANGO!

nutrine
Naturo
MANGO FRUIT BAR
Product of India

NATURO FROM NUTRINE. A THICK JUICY MANGO BAR.
MADE FROM PURE MANGO PULP.
SWEETER AND SO MUCH MORE THAN JUST A MANGO.




Mudra:Blr:NN:310:90